# विषयानुक्रमणिका



येनांबावधि वार्षिकमूल्यं प्रेषितं तेषां सविधे व्ही. पी. द्वारा मधुरवाणी समेष्यति । तामिमां गृण्हन्तु अनुगृण्हन्तु चास्मानिति ।

Printed at Veer-bharat Printing Press, Belgaum by its proprietor A. P. Chougule and Published by Shriniwasacharya Burli at House No. 1698 Belgaum.

॥ श्रीशः शरणम् ॥




सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

११ वर्षे ]   १८६६ शाक कार्तिकस्य   [ ५ सञ्चिका

## मङ्गलम्

उपनिबन्धा पंढरीनाथाचार्यः

क्रीडा नैव मया कचित्कुवलयोत्पीडावहाऽनुष्ठिता
मातङ्गीकुलसंगमोऽपि विहितो नो वा मदान्ध्यं मम ॥
तादृग्दोषकृतं गजेन्द्रमपि च प्रोद्धृत्य किं वाऽद्य मां
निष्पापं निरुपद्रवं चिरयसि प्रोद्धर्तुमेवाच्युत ॥१॥

मा लीलाललितां जहीहि कमलां नीलां च मा मा त्यजेः
मञ्चं वञ्चय किञ्च मुञ्च न महीं माऽकर्ष पक्षीश्वरम्
संसारार्णवमोहदुर्ग्रहमुखात् त्रातुं च पातुं च मां
यत्त्वत्स्नेहभरार्द्रनेत्रमुकुलस्येषद्विकासोऽप्यलम् ॥२॥

## सुभाषितं

सर्वे वस्त्रनियन्त्रणादुपगता भावं हि दैगम्बरं
दौर्भिक्ष्यात् क्षुधिता अटन्ति परितो भिक्षां सदा शूलिनः
इत्थं शम्भुसरूपतामधिगता अभ्यर्थयन्तीश्वरं
यन्मृत्युंजयतामपास्य भगवन् स्वेच्छामृतिं यच्छ नः

---

संपादकीय विचाराः

# "ॐ अथातो अन्नजिज्ञासा"

## "निराहारो हा रोदिमि कथय केषामिह पुरः"

अखण्डे भारतखण्डे सर्वत्रापि दुर्भिक्षतापिशाचिकाया आकाण्डताण्ड-वाडम्बरः विभीषयति सर्वानपि। सर्वकार उद्घोषयति यद् 'अस्मिन्वर्षे भारते त्रिंशल्लक्षटन्मितस्य धान्यस्य न्यूनता वर्तते' इति। सर अकबरहैदरी तु ततोऽप्य-धिकलक्षटन्मितस्येति। श्रीमान्मसानीमहाशयस्तु सर्वाहारपरिस्थितिं समालोच्य यदि शतलक्षटन्नाहारस्य कुतश्चिदायातं भवेत् तदा भारतस्य पर्याप्तं भवेदिति वदति। तदेतदन्नविषयकं कोलाहलं निशम्य अस्मान् याचेरन्निति ब्रिटन-अमेरिकाप्रभृतिराष्ट्राणि आदावेव स्वस्वदेशेष्वपि आहारन्यूनता वर्तते इत्या-वेदयन्ति। अतो भारते केन्द्रसर्वकारो भयग्रस्तः चिताग्रस्तो वर्तते अथवा तथा नटतीव। भारतसर्वाधिकारी (व्हायिसराय) वेव्हेलमहाभागः सर्वानपि भारतराजकीयपक्षप्रमुखाना कार्ये आहारसमस्यानिवारणार्थम् उपायान् विचार-यितुं साहाय्यमनुष्ठातुमभ्यर्थितवान्। परंतु युद्धकाले भारतदेशतः अपरि-मिताहारसामग्रीं महानौकासु आपूर्यापूर्य ब्रिटनअमेरिकाप्रभृतिदेशेभ्यः प्रेषणसमये किमयं व्हायसरायो भारतीयं कमपि वा नेतारं विचारितवान्?। दूरेऽस्तु ताव-द्विचारणाविषयः। परंतु कदा प्रेषितं कथं प्रेषितं कियत्प्रेषितं इत्यादिवार्तागंधमपि नावेदितवान् भारतीयेषु। अत एव रोषकषायिताः श्रीमन्त भारतीयनेतृप्रमुखा गांधीआझादजवाहिरलालनेहरूमहोदयाः गर्जंति 'अस्य दौर्भिक्ष्यस्य कृत्स्नस्य सर्वकार एव सर्वात्मना कारणम्, स एव तन्निवारणोपायमन्वेषयतु स्वीकरोतु चेति'। "यदि अस्मिन्वर्षेपि १९४३ वत्सरे इव दुर्भिक्षाकोलाहलो भवेत् तदा क्षुत्क्षामा भारतीया जना महतीमेव क्रान्तिमुत्पाद्य स्वकीययात्यन्तदशाकारणीभूतसर्वकारं समूलमेव विध्वंसयेयुः इति" १४।२।४६ दिवसे काशीक्षेत्रे भाषणावसरे प्राह जवाहीरः।

## " ॐ भवति भिक्षां देहि "

एव तदेतत्सर्वमपि भाविनमनर्थं मनसा आकलय्य किंचिदिव चिन्तातुरः सर्वकारः कतिपयभारतीयप्रमुखान् ( न तत्र कांग्रेसीयः ) प्रतिनिधीन् गृहीत्वा युरोपे तदेधनधान्यसमृद्धेषु राष्ट्रेषु ॐ भवति भिक्षां देहीति अन्नभिक्षार्थं पर्यटति । परं तत्सर्वं चिन्तानटनमेत्र । सत्यमेव यदि ब्रिटिशानां मनसि भारते क्षामपरिहारेच्छा वर्तते तर्हि संत्येव बहव उपाया मार्गाश्च । यदि बद्धा मुष्टिः किंचिदिव विकास्येत इंग्रेजानां जीवस्य गलस्य कण्ठस्य मित्राणि अमेरिका—कानडा—आस्ट्रेलिया—अर्जेंटीना—प्रभृतिराष्ट्राणि यदि ईर्षादिव मानसिकमौदार्यं प्रदर्शयेयुः 'सह नाववतु सह नौ भुनक्तु' इत्याद्यौपानिषदतत्वमनुसरेयुः तदा भारतीयाहारसमस्या सुलभतया शक्यते निवारयितुम । अमेरिकाप्रभृतिसमृद्धदेशेषु धान्यानां दुरुपयोगम् अधिकोपयोगम् अनावश्यकोपयोगं च तीव्रतरं निरुध्य मितव्ययं धान्यनियंत्रणं च कुर्यात् । स्रत अमेरिकायां १९४३—१९४४ संवत्सरयोः १०८० लक्षबुशलपरिमितः ( बुशल ६० पौंड ) गोधूमस्तोमः मादकद्रव्यनिर्माणार्थं व्ययीकृतः । पंचलक्षबुशलगोधूमः पशुपक्षिभक्षणार्थम उपयोजितः । १९४४–४५ संवत्सरयोरपि अमेरिका—कानडा—आस्ट्रेलिया—आर्जेंटीनाएतेषु चतुर्षु देशेषु मिलित्वा १०० कोटिबुशलप्रमाणगोधूमराशेरधिकः अर्थात् तद्देशचतुष्टयगतसर्वजनानां यावदावश्यकः तावत्प्रदायापि अवशिष्टः तेषामनावश्यकः पतित असीत् महानेव संग्रहः । यदा अमेरिकादेशेषु अपरिमितगोधूमराशिः मादकवस्तुनिर्माणाय उपयुज्यतेस्म तस्मिन्नेव वत्सरे भारते बंगालप्रान्ते त्रिंशल्लक्षजना अन्नमन्नमिति वदंतो मृता अभूवन् । इदानीं तस्या एव अथवा ततोप्यतिविषमतरायाः परिस्थित्याः पुनरावृत्तिमुत्प्रेक्ष्य अस्मदपेक्षया अत्याधिकमेव क्षुधाकालाहलमुद्भावयंति पाश्चात्यराष्ट्र । इंग्लंडेपि एतादृश एव महानाहारकोलाहलः श्रूयते । तत्रत्या आहारमंत्रिणः सामंदं सोच्चस्वरं साक्रोशं च कथयंति यत् ब्रिटिशप्रजाः क्षुधाक्रान्ताः बुभुक्षिताः सम्पन्ना इति । किमिदं वितथमवितथं वेति विचारयामः ।

## "किमयं क्षुधाऽऽक्रोशः उत अजीर्णक्लेशः"

समग्रप्रपंचे एव धूर्तशिरोमणिः शृगालयुक्तिमान् दूरदर्शी आत्मंभरिरिंग्लंडो युद्धप्रारंभानंतरम् आपद्धनमिति आपद्धान्यमिति च ११०० लक्ष बुशलगोधूमराशिं संगृह्य अक्षतं अव्ययितं च गोपायति । प्रायः तं न सहसा उपयुनक्तिस्म । यदि कदाचित् गत्यंतरभावादुपयुंजन्नपि पुनः किमपि कृत्वा कथमपि परिश्रम्य कुतश्चिदानीय तीव्रमेव गृहीतांशमापूर्य संग्रहमन्यूनं परिपूर्णमेव रक्षतिस्म । एवमिंग्लण्डस्य स्वयमाहारमनभिवर्धयतोपि तस्य आहारचिंता नास्त्येव । अथापि ब्रिटिशाः क्षुत्क्षामाः, तेषामाहारो नास्ति पर्याप्तः इति शंखनादः प्रचलत्येव । अस्य क्षुत्क्षामजनसमूहस्य आहार-प्रमाणगतसंख्यांकादयः परीक्ष्यंते तदा महदेवाश्चर्यं भवति । १९३४ वर्षे प्रतिपुरुषं १०.६ पौण्डगोधूमः प्रदीयतेस्म । तावता ते तृप्ताः पूर्णोदराश्चासन् । परमिदानीं २२१.३ पौण्डगोधूमः प्रत्येकं प्रतिवर्षं प्रदीयते । एवमेव बटाटीप्रभृतिनैकखाद्यवस्तुवितरणे मांसमेकमपहाय प्रमाणमधिकाधिकमेवालक्ष्यते। इयदधिकाहारं भक्षयित्वापि यथाक्रोशः स क्षुधा आक्रोशो वा अजीर्णान्न-त्रासाद् वा वाचका एव विचारयंतु ।

## "क्षुत्क्षामा हि प्रकृतिकृपणाः शास्यताशास्तृतादौ"

एवमेव सर्वेपि ऐरोप्यामेरिकादिराष्ट्राः स्वस्यैव रोदनरामायणमनुवाचयन्तः हिंदीआहारसमस्यामलक्षयन्तः तूष्णीमासते तदा भारते १० कोटिजना आहारवैकल्येन मरिष्यंति । क्षुधा दिग्भ्रान्ता जनाः किमपि कुर्युरेव । कर्तव्यमेवेत्युपदिशंति च तत्रतत्र वारंवारं नेहरूअरुणा-असफअली प्रभृतयः । "क्षुत्क्षामा हि प्रकृतिकृपणाः शास्यताशास्तृतादौ ।" क्षुधाक्रांताजनाः कार्याकार्यविवेकविकलाः विकृतमस्तिष्का रोषकषायितच-क्षुष्का भ्रान्तमनस्का ग्रहग्रस्ता इव वाताविष्टा इव भूताविष्टा इव ब्रिटिश-साम्राज्यस्य समूलनिर्मूलने प्रयतेरन् । अतः समये एव जागृतैः साम्राज्य-शासकैः सहानुभूत्या हिंदुआहारप्रश्नो विचारणीयः ।

## "न कूपखननं युक्तं प्रदग्धे कूर्चिकांचले"

महात्मना श्रीगांधीमहाशयेन उपवनारामादिषु कुसुमलतादीनुत्कृत्य तत्र कन्द-मूलफलादीनां प्ररोहणं अल्पभक्षणं कृष्णव्यापारनिरोधनं वापीकूपतटाकादीना-मुत्खननं इत्यादिउपायाष्टकं संसूचितम्। परं नैते रष्टभिरुपायैरेव अनिष्टपरिहारो भवति। यतो हि इदानीं वृष्टेरभावात् उत्कर्तितेष्वपि लतावृक्षेषु शाकादीना-मितरखाद्यपदार्थानां वा कथमभिवर्धनं शक्यं भवेत्। कूपं खनित्वा जल-महत्य प्ररोहणीया आहारपदार्था इति तु न शक्यं "न कूपखननं युक्तं प्रदग्धे कूर्चिकांचले" इति वचनमनुसृत्य सद्य एव क्षुधैव विभीषयति कवलीकुर्वति च भीषणदुर्भिक्षदावानले एतादृशनवीनधनधान्यशाकपाकादिप्ररोहणव्यापारा न यशस्वीभवंति। महात्मानिर्दिष्टा इतरे उपायाः फलोपधायका विद्यंते।ताननुसृत्य यावच्छक्यं प्रयततां सर्वकारः आहारपरिस्थितिसुधारणायै।

## "यया कया च विधया बह्वन्नं प्राप्नुयात्"

आहारपरिस्थितिसुधारणार्थमुपयुक्ता अवश्यमंगीकार्याः केचिदुपायाः। अस्मिन्नवसरे आहारपदार्थानां नवप्रवर्धनापेक्षया कुतश्चित् सिद्धान्नस्यैव आनयनं साधु। युद्धकाले ततः प्रागपि भारतवर्षः बहूनामेव ऐरोप्यराष्ट्राणां धनधान्यादिप्रदानपुरस्सरं नितरामुपाकरोत्। इदानीं तेभ्यो राष्ट्रेभ्यः अनु-नयेन प्रार्थनेन याचनेन आग्रहेण वा आहारायातार्थे प्रयतनीयम्। सयामे १५ लक्षटनतण्डुलसंग्रहः वर्तते इति शृणुमः। परं तद्धान्यराशिं भारतं प्रत्यानयनाय साधनं नौकादिकं नास्तीतिनिमित्तं प्रदर्श्यते। पंचषड्वर्षपर्यंतं महायुद्धे अत्यद्भुतं कार्यं विधायअभूतपूर्वमेव विजयं संपादितवतः सामुद्रसम्रा-डिति प्रसिद्धस्य ब्रिटिशनौकादलस्य सयामतो धान्यानयनमसाध्यमित्युक्तिः न अंशतोपि याथार्थ्यं सामंजस्यं वा अवगाहते। नौकानां न्यूनता स्यात् तदा ४० कोटिभारतीयप्रजासंरक्षणभारस्य ब्रिटिशानामेव उपरि सत्त्वात् नवीननौदलं निर्मायापि सत्वरमन्नसामग्री आनेया। यदि सत्यमेव नावां न्यूनता विद्येत तर्हि तस्मादेव सयामतः स एव तण्डुलराशिः भारतादपि

चतुर्गुणदूरस्थितक्यूबां प्रति कथं गच्छति ? । तस्माद् ज्ञायते एव ब्रिटिशा आहारसमस्यापरिहाराय न मनःपूर्वकं प्रयतंते इति । भारते अपि एकादश-प्रांतमध्ये पंजाबसिंधसंयुक्तप्रान्तबिहारप्रभृतिषु प्रान्तेषु अधिक आहारसंग्रहो वर्तते । परंतु तत्र कृषीवलेभ्यो धान्याहरणपद्धतिरेव न साध्वी । अनया अव्यव-स्थितया धान्याहारसंग्रहपद्धत्या अनावश्यकतया तत्र धान्यमवशिष्यते । पंजाबे विभज्यमानगोधूमप्रमाणाधिक्यात् तत्र पूर्णप्रमाणेन न कैरपि गृह्यते । एता-दृशाधिकधान्यसंग्रहप्रदेशेभ्यः अनुनयादाग्रहाद्बलात्कारेण वा धान्य-मादाय आहृत्य च सर्वत्रापि विभजनीयम् । तत्र राष्ट्रीयप्रमुखाणां सहकार अत्यंतमावश्यकः । स च संपूर्णस्वराज्यप्रदानमन्तरायतते । अतोऽचिरादेव भारतस्य संपूर्णस्वराज्यमुद्घोषणीयम् इति संसूचयामः सादरमित्यलम् ।

**सहसंपादकः**

# मुंबईप्रान्तीयसर्वप्राथमिकशिक्षकाणां कर्मसन्यासः

महायुद्धाद् बहूनामेव जनानां हानेरपेक्षया सविशेषः लाभ एव संवृत्तः । सर्कारीयाधिकारिणस्तु न्यायेन वा अन्यायेन वा उपार्जितं धनं कुत्र वा निक्षेपणीयमित्येव चिन्तयन्ति । रक्षणाधिकृतानां (पोलीस) तु भारतसंरक्षणविधिर्नाम अपेक्षितप्रदाता कल्पवृक्ष एव । व्यापारोद्यमव्यवसा-यिनां तु इदानीं महानगरवासिनां मन्दिरेषु " नित्यं नृत्यं विधत्ते धनपति-विभवादुत्तरा वित्तराजिः " । बहव एव कृष्णव्यापार (काळाबाजार) ज्ञातास्वादाः वैश्याः

यावद्गङ्गा च गोदा च यावच्चन्द्रदिवाकरौ
तावद् रेशनिंगकंट्रोलौ चलेतां भारतावनौ ॥

इति मनःपूर्वकं प्रार्थयन्ते भगवन्तम् । क्षेत्रोपजीविनः कर्षकाः क्षेत्रस्वामिनश्च दशगुणितमूल्यलाभात् स्वधान्यस्य धन्यं धन्यग्रेसरं चात्मानं मन्यमानाः “ महार्घतात्र धान्यानां जीयान्नः शरदः शतं ” इति आशीर्वदन्ति । दैहिक-कष्टकर्तारोऽपि कल्पनातीताधिकप्रमाणेन श्रमप्रतिफललाभेन “ कमलानुगामि-मदिरोन्मीलन्मदाघूर्णिताः ” एव संजाताः । एवं सर्वेऽपि जनाः उपर्युपरि महायुद्धं निन्दन्तोऽपि अन्तरेवाभिनन्दन्तः प्रभूतामेव च धनधान्यसमृद्धिं विन्दन्तः नितरामानन्दन्त एव विद्यन्ते ।

परं तु महायुद्धदुर्भीषणफलानि अनुभवन् महार्घतापिशाचिका-विभीषितः यः कोपि स्यादत्र दुर्दैवी नान्यः सः प्राथमिकशालाशिक्षकाद् वराकात् । एतादृशे महार्घतासमये अपि तस्य मासिकवेतनं पञ्चदशरूप्यकेभ्यो नाधिकम् । तावद्वेतनं इदानींतनसमये “ शाकाय वा स्यात् लवणाय वा स्यात् ”

इयतीषु राजकीयशाखासु शिक्षणशाखा नाम अत्यन्तरुक्षशाखा । अस्यां च मरुभुवि इच्छताऽपि कृष्णमार्गेण धनं संपादयितुं न शक्यते । अत एव सर्वेऽपि शिक्षकाः दुर्धरर्णभारभुग्ना दारुणतरदारिद्र्योद्विग्नाः अपारा-नुत्तीर्यदुःखदैन्यसागरमग्ना खिद्यन्ति क्लिश्यन्ति नश्यन्ति च । वेतनस्य अल्पीयस्त्वेऽपि कार्यस्य परं महीयस्त्वमेव । अत एव बहवः शिक्षकाः आत्म-हत्यां विधाय अस्माद् अनुकम्पनीयकार्यात् मुक्ता अभवन् । अनेकेविस्तृत-कुटुम्बाः शिक्षकाः संसारभारं निर्वोढुम् अक्षमा देशभ्रष्टा एव संजाताः । इदानीं विद्यमाना अपि “ मा जीव मा मर ” इति जीवन्मृतपरिस्थित्यामेव वर्तन्ते । “ धिगिमां शैक्षणिकीम् असारताम् ”

एवमत्यन्तसंत्रस्ता क्षुधिता क्षुब्धाः निराशाः आकण्ठपर्यन्तागतप्राणा अन्ततो कर्मसंन्यासः कर्तव्यः इति निर्णयमङ्गीकृत्य इदानीं नैष्कर्म्यमेव अव-लम्बन्ते । तपस्विनामेतेषां हठयोगः यशस्वीभूयात् इति आशास्महे । परन्तु यावत्पूर्णफलोदयं यावदधिकवेतनवितरणाश्वासनं सुसंघटितया सुव्यवस्थितया

अविचलया एकमुखया रीत्या नैष्कर्म्यं परिपाल्य पूर्णफलमधिमच्छन्तु। परं सर्वोऽपि कार्यक्रमः अहिंसात्मक एव भवेत्। अन्यथा मोहमयीदना-विकइठवद्दुःखपरिणामः पराजयान्तः भवेत्। अतः अहिंसा अविचलता आत्मप्रत्ययः आचूलमूलमेकरूपता एकवाक्यता इत्यादिइठसिद्धिप्रयोजकधर्मान् प्रतिपाल्य फलेग्रहिप्रयत्नाः भवन्तु इति सस्नेहं सूचयामः शिक्षकबन्धून्। सर्व-कारमपि सादरं संसूचयामः यद् भविष्यन्नूतनजगद्भाविनागरिकाणाम् अस्मद्वि-द्यार्थिबालानां प्राथमिकमेधासंस्करणभारः येषामुपरि वर्तते ते शिक्षका यद्य-संतुष्टचित्ता दरिद्राश्च स्युः तदा नास्माकं शिशुप्रपञ्चस्य सम्यग्बुद्धिविकासः भवेत्। राष्ट्रियहिताकांक्षी न कोऽपि सर्वकारः एवं प्राथमिकशिक्षकान् उपेक्षेत। अतः तीव्रमेव तज्जीवनपर्याप्तवेतनं प्रदाय नवजगन्निर्माणकार्यं निरातंकं चालयन्तु इति। स. संपादकः

---

## ॥ श्रीगणेशस्तवः ॥

लेखकः—पण्डित कृष्णदत्त भारद्वाजः शास्त्री, आचार्यः, एम्. ए., डी. ओ सी.

विधुविलसितभालं कांतमूर्तिं प्रसन्नम्
मदमुरान्वितमौलिं विघ्नहर्त्तारमीशम्।
निखिलजनप्रणम्यं पार्वतीप्रेष्ठपुत्रम्
लसदमलकराब्जं श्रीगणेशं नतोऽस्मि ॥१॥
सहजवदनकान्तिर्विघ्नहर्ता सदैव
भ्रमरवलयभूषाऽलङ्कृतास्यः सुमूर्तिः।
सुरनरमुनिपूज्यो रत्नयुक्तासनस्थः
जयति भुवननाथः श्रीगणेशः सुरेशः ॥२॥

---

# वररुचेराख्यायिका

वररुचिर्नाम महाकविरेकः सुप्रसिद्धः संस्कृतवाङ्मयेतिहासे । सुप्रसिद्धस्य नवमनन्दस्य आस्थानपंडित आसीत् । वररुचिरयं प्रथमतो यदा महाराजनवमनन्दस्य सभामुपागात् तदा सरससरसैर्ललितललितैः कवनविशेषैरनितरामानन्दयत्सर्वान् सभास्तारान् महाराजं नवमं नन्दमपि । परं सचिवायत्तसिद्धिर्नन्दमहाराजः आत्मनः अमात्यस्य शकटारस्य आदेशमन्तरा न किमपि करोतिस्म । सच शकटारो नाम सचिववरो महाविद्वान् अतिमेधावी परगुणगणग्रहणविमुख एधमानद्वेषी चासीत् । तेन वररुचेः कवित्वं न प्रशशंस । न चादिशत्सुवर्णमुद्राः प्रतिदातुम् । परं निष्किंचनो वररुचिः कष्टेन राजधान्यां कालमतिवाहयन् विविधानुपायान् आलोचयन् महामात्यशकटारस्य प्रियतमां वामांगीमुपेत्य समभ्यर्थयदेवं दुरवस्थया पीड्यमानोहमस्मीति । सा च चतुरा विदुषी सरलकवितारचनकौशलाकृष्टहृदया रहसि वल्लभं शकटारमावेदयत् । महाराजसम्मानभाजनं कारयतु भवान् वररुचिं महाकविमिति । एवमर्धांगिन्या निवेदितः शकटारः राजसभायां वररुचेः कवितामनुपानिशम्य नितरां प्रहृष्ट इव महाराजसविधे " साधु साधु महाकवे साधु साधु धन्यो भवान् भगवत्याः सरस्वत्या अपरः अवतार एवेति " प्रशशंस प्रशंसया च महामना नन्दमहाराजः प्रहृष्टस्तस्मै वररुचये शतं दीनारान् प्रायच्छत् । प्रतिदिनं महाकविः शतश्लोकैः राजानमानन्दयन् दीनारान् महाराजतो लभतेस्म । तेन वररुचेर्यशो वर्चश्च देशमभिव्याप्तमसहमानः शकटार एकदा रहसि राजानमावोधयत् अयमस्थाने महानर्थोत्सर्ग इति । सरसकवितानिर्माणकौशल्ये अनुपमे जाग्रत्यस्मिन् कथमस्थाने इति पृष्टः प्राह शकटारो वररुचिरयं न स्वतो रचयति किंतु इतरमहाकविकृतानेव श्लोकान् स्वरचितान् भासयति । कथमितिचेत् श्वो विपर्योयं स्फुटीभवति । संति किल मदीयाः सप्त या दुहितरस्ता अपि अनेन पठितान् यदि वदेयुस्तर्हि भवान् रहस्यमवगच्छत्वेवेति । श्वः परीक्षामहे रहस्यमिति राजगदितः परेहनि महामात्यः शकटार आत्मनः यक्षा यक्षदत्ता भूता भूतदत्ता एणिका वेणा रेणाभिधानाः सप्त दुहितॄः समादाय राजसभां

प्रविवेश । ताः किल मेधाविन्यो विद्यामाप्तुराश्चासन् । तासु या प्रथमा यक्षाभिधाना सकृदुच्चरित.नू श्लो कानसंदिहाना तथैव पठितुं दक्षा चासीत् । तदनु सर्वा अपि क्रमेण द्वित्रिचतुःपंचषट्सप्तवारश्रवणमात्रेण यथोच्चारितमुच्चारयितुं समर्था आसन् । सभायां वररुचिरागतः प्रतिदिनमिव तस्मिन् अहनि स्वरचिताः शतं कविताः सरससरसा ललिताश्च नन्दमाश्रावयत् । ततश्च क्रमेण यक्षायक्षदत्तादयः शकटारदुहितरः सर्वा अपि यथोच्चारं पठंत्यो व्यस्मापयन् महाराजं नन्दं तथा तत्सभासारानपि । एतेन शकटारकथितमवितथं मन्यमानो महाराजो न सदकरोत्सुवर्णमुद्राप्रदानेन महाकविं वररुचिम् । विस्मितमना वररुचिः खिन्नमानसो गृहमगात् । आह्वानमन्तरा सभायामागमनं न्यषेधयन्महाराजः । तेन पुनरपारचिन्तासन्तप्यमानमानसो वररुचिर्विविधानुपायानालोचयन् कालमतिवाहयतिस्म ।

चतुरोऽयं महाकविर्निशीथे इतराज्ञातो गंगायास्तीरमुपेत्य वालुकासु शतं सवर्णमुद्रा निखाता निधाय पुनः संध्यासमये शतं पद्यानि पठन् तच्छ्रावणसंतुष्टया महानद्या यंत्रमुखेन स्वहस्तेनैव सर्वजनसमक्षं दीयमाना इव समुपलभ्य हृष्टमानसः गृहं प्रतिनिवर्ततेस्मसुरतरंगिण्या स्वहस्तेन दीयमानसुवर्णमुद्राः समक्षमवलोकयंतः महाजनाः प्रतिषिद्धेपि राजसम्माने तदीयगुणगणाकृष्टहृदया भगवती गंगादेवी प्रतिदिनं महाकविं सभाजयतीति नितरां स्तुवंतिस्म । आश्चर्यावहो वृत्तान्तो महाराजं नन्दं व्यस्मापयत् । किमेतद्रहस्यमिति विज्ञातुकामः शकटारो वररुचिचरित्रमवगंतुमेकमतिचतुरं चारमायोजयत् । चारश्च मध्यरात्रे जनसंचारविरहिते वालुकान्तर्निधानोद्यतं वररुचिं तथा तेन क्रियमाणं यंत्रविधानमपि तेन वररुचिना अनवलोकितः सर्वं विज्ञाप शकटारायाचचक्षे । ततश्च महाराजो नवमनन्द एकदा आश्चर्यावहं वृत्तमिदं यद् भगवती गंगादेवी स्वयमर्चयति सत्कारदानेन महाकविं वररुचिमिति यदा समपृच्छत् तदा हसन् महामात्यः शकटारो महाराज श्वः संध्यासमये स्पष्टीभवेदयं वृत्तांत इत्यावेदयत् । ततश्च समघोषयन्नगरे महाकवेरद्भुतं चरित्रं भगवत्या गंगादेव्या क्रियमाणं सत्कारविशेषं च विस्मितमानसो महाराजः स्वयमुपस्थितः प्रत्यक्षीकरिष्यतीति नागरिकाश्च सर्वे समुपस्थास्यंतु इति ।

ततश्च महाकविर्वररुचिर्यथाप्रकारं मध्यरात्रे यंत्रविधिं सुवर्णमुद्रानिधानं

च विधाय प्रतिनिवृत्तः । महामात्योऽपि निश्चिन्तं सुखसुप्तमवगत्य इतरानवगतस्तत्र निहिताः सुवर्णमुद्राः यंत्रं चात्मसात्कृत्य यथापूर्वमिव तत्स्थानं निर्धनं यंत्ररहितं कृत्वा प्रतिनिवृत्तः । संध्यासमये सहस्रशो जना विस्मयावहं वृत्तान्तं प्रत्यक्षीकर्तुमुत्सुका गंगातीरमलमकुर्वन् । प्रतिदिनमिव महोत्साहशाली महाकविर्वररुचिरुच्चस्वरेण शतं कविता आश्रावयत् । परं तद्दिने तत्र यंत्राभावेन दीनाराभावेनच कथं वा वररुचेरभिमतं सिद्ध्येत् । तत्सर्वं यंत्रसाधनं विश्वस्तं स्वगृहादानीय महामात्यः शकटारो नन्दमहाराजाय कपटकृत्यमखिलमावेद्य वंचकोऽयं वररुचिरिति विश्वासमुदपादयत् । लोके अपहासविषयश्चाभूद्वररुचिः ।

ततश्च महता कालेन महाकविर्वररुचिरात्मनो गुणगणैरखिलानपि नन्दानुरक्तान् नागरिकानात्मसादकरोत् । आमात्यशकटारे बहुनामपरागमप्युत्पादयामास । तेन सर्वे महाराजमुपबोधयन्तः समये शकटारो नाम महान् शत्रुरयं स्वाधीनमंत्रवशे महाराजं नन्दमेकदा निहत्य स्वपुत्रं राज्ये निवेशयितुकाम इति नन्दे बुद्धिमुदपादयन् । विषयमेनं चतुरमतिः शकटारः क्रमेण बुध्वा महाराजमनोगतां बुद्धिमेतामपहारयितुमक्षमः किंकर्तव्यमजानन्नासीत् । एतदवधौ वररुचिरात्मनो बुद्धिवैशद्येन इतरेषां साहाय्येन च शकटारं कारागृहं प्रावेशयत् ।

शकटारस्य स्थूलभद्रः श्रीयकश्चेति द्वौ पुत्रावास्ताम् । तयोरेको राज्यमनपेक्षमाणो व्यसनासक्तश्च । अपरश्च राज्यतंत्रनिपुणो मेधावी व्यवहारकुशलः सुप्रसिद्धायां रूपविलाससौन्दर्योपहसितवराप्सरोलोकायां कोशाभिधायां वारांगनायामासक्तश्च । गच्छत्येवं काले शकटारः पुत्रयोस्सुखमपेक्षमाणश्चतुरं स्वं पुत्रमेकदा कारागारे आहूय प्रोवाच । मयि महाराजनन्दो नैव विश्वसिति । भूयान् कालो मया सुखानुभवेन नीतः । अवशिष्टश्चायुष अल्पः कालः । परम् भवतोः पुत्रयोर्ममानुबन्धेन दुःखानुभवप्रसंगो माभूदिति बलवान्मे अभिलाषः । अतः कथयामि ते कंचिदुपायम् । महाराजनन्दसन्दर्शनमपेक्षमाणोऽहमभ्यर्थयामि देहि दर्शनमिति । तदवसरे तत्समक्षमेव भवान् मम शिरः कृन्ततु निशितधारया असिलतया । ततः पृच्छति भवंतं नन्दः किमेवमरे इति । ततो ब्रवीतु भवान् राजभक्तिमनुपमां तस्मिन् प्रदर्शयन् दुष्टयतुच मां राज्यापहारकामम् । ततश्च महाराजनन्दः पितृहत्ययापि राजभक्तं भवन्तं

मन्वानस्त्वां मंत्रिपदे नियोजयिष्यतीति । एवमादि वचनजातमुपनिशम्य पितृवचनमननुमोदमानोऽप्यप्रहातिरेकेण तथास्तु इति अन्वमोदत । कालान्तरेण स प्रसंगोपि प्राप्तः । पितृवचनमनुपालयन् चकर्तच शिरः । नन्दोपि यथालोचनमायोजयदमात्यपदे तं शकटारकुमारं । ततश्च सर्वानर्थमूलं हि वररुचिरिति मन्वानो वररुचेर्महाराजस्य नन्दस्य सभायां सम्मानातिरेकं च असहमानश्चिन्तयन्नासीत् । नूननामात्यस्य या प्रेयसी कोपाभिधा वारांगना तस्या एव कनीयसी भगिनी वराप्सरोरूपा वारयोषिदार्सादुपकोशाभिधाना । गायनवादननर्तनादिकलाकुशला च स्त्रीरत्नम् । तस्या मासक्तश्च वररुचिरिति कोशया निवेदितं विज्ञाय सम्मंत्र्य आत्मनः समीहितसिद्धये कंचित् उपायमावेदयामास। अयि नयनहृदयानन्ददायिनि कोशे चतुरा खलु भवती करोतु मदीयं कार्यमेकमचिरादिति । किं तत् कार्यमिति पृष्टः प्रोवाच ताम् । यदा च वररुचिरुपकोशामन्दिरमुपेयात् तदा तस्मै मदिराप्राशनमन्तरा नाहमद्य वशे भवामीति वदतु भवदीया भगिनी । विषयलोलुपो भगिनीभोगलालसस्तद देशमनुपालयेद्यथा तथा करोतु तद्द्वारा । तेनाहं भवत्यै तस्यैच अपरिमितं प्रयच्छामि धनराशिमिति । साप्यन्वमोदत । अकथयदुपकोशामपि । धनलोभाकृष्टहृदया अवश्यं मदिराप्राशनोद्यतं वररुचिं करोमीति प्रत्यजानात् । अर्थात् एकस्मिन् निशीथे उपकोशामन्दिरे भोगकामनयागतो वररुचिः प्रथमं धर्मकामनया अनपेक्षमाणोपि मदिराम् न सा प्राशनमन्तरा बाहुपाशमेष्यतीति मन्वानो मदनबाणसंतर्जितो मदिरापूर्णं पानपात्रं गृहीत्वा पातुमारेभे । समयमिमं प्रतिपालयन् शकटारकुमारो महाराजनन्दं तत्समये सहसा एव उपकोशामन्दिरं प्रावेशयत् । प्रथमं महातपस्वी धर्मानुष्ठानपरायणो ब्राह्मणश्रेष्ठ इति श्रद्दधानो नन्दस्तदनवलोकित एव मदिराप्राशनं वारांगनाबाहुपाशबंधनं च प्रत्यक्षतो वीक्ष्य पुनस्तमवमानयां चक्रे । ततश्च न केवलमपमानितः किन्तु बलात्कारेण तप्तायसरसं पायितो मारितश्च वररुचिरिति ।

एवमनेकदुःखपर्यवसायिनी आख्यायिकेयमवलोकिता कस्मिंश्चिन्नियतकालिके पत्रे । वररुचेर्वृत्तम् कथासरित्सागरे श्रूयते । वररुचिरेव सुप्रसिद्धो महान् वैयाकरणः कात्यायनो वार्तिककृत् इति हि प्रसिद्धिः । मुनित्रये परिगण्यमानोऽयं विद्वन्मणिः कथं वेश्यासक्तो मिथ्याकर्मकुशलश्च निर्घृणो मदिरासक्तो विषयो-

पभोगलंपटश्च भवेदिति सन्देहदोलारूढमस्मन्मनः। केनापि दोषा एते तस्मिन्नारोपिताः स्युरिति च केचन कल्पयन्ति। अतो वयमभ्यर्थयामो विद्वत्सु मधुरवाण्या वाचकेषु महाकवेरादिवैय्याकरणस्य वररुचेर्विषये किं तत् तथ्यमितिवृत्तं स्यात् तत्सप्रमाणं विलिख्य प्रेषयन्तु महाभागा इति। तदनु च तं लेखमवश्यं प्रकाशयामो मधुरवाण्यां इत्यलं पल्लवितेन.

**सम्पादकः।**

---

# न मातुः परदैवतम्।

**ले. डॉ. बी. आर. गोकर्ण,** एम्. बी. बी. एस्. पूना.

१ अस्ति सह्याद्रिपर्वतोत्संगे कुंदनपुरं नाम नगरं यत्र प्रदेशस्यातिशीतलतया पादपाः सदैव हरितः सन्ति। तत्रत्यदृष्टिगतप्रदेशः निर्झरैर्जलपातैरासमन्ताद्धरितत्वेन च नयनानन्दकरो वर्तते। तत्र सदाशिवरायो नाम कश्चिद्ब्राह्मणः राजसेवायामुद्युक्तः कुंदनपुरस्य न्यायमंदिरे लेखकस्य स्थानमभूषयत्। प्रायः राजसेवायां नियुक्ता लेखकाः विशेषतः न्यायमंदिरे, उत्कोचग्रहणेन स्ववेतनंअधिकतरं कुर्वन्तीति सर्वश्रुतमेव। तथापि सदाशिवरायः ऋजुस्वभावः विकारहेतुना परिवृतोऽपि स्वं न्याय्यं वेतनं विनाऽन्यां कपर्दिकामपि सेवितुं नैच्छत्। बहुवर्षेभ्यः प्रभृति सेवमानस्य तस्य प्रतिमासं शतरूप्यकात्मकं वेतनं जातम्। प्रकृत्या ऋजुस्वभावः स्वकार्येष्वतिनिपुणश्च अधिकारिणः प्रेमास्पदं जनानामादरास्पदं सममेव बभूव।

२ तत्रैव भाटकेन गृहं संपाद्य स्वभार्यया गिरिजया सुखं न्यवसत्। सकलेषु सुखसाधनेषु सत्स्वपि तौ दंपती अनपत्यतया परं विषादमन्वभुंक्ताम्। कादंबर्यां श्रूयते खलु देवतार्चनब्राह्मणसंतर्पणादीनुपायान् पूर्वजाः संततिप्राप्तये

अकुर्वन्निति । किंतु विंशतितमे शतके को वा एतादृशानुपायानवलंबेत ? । तस्मात्सदाशिवराय: प्रमुखशस्त्रवैद्यै:संमंत्र्य गिरिजाया: गर्भकोशगतदोषपरिहाराय शस्त्रक्रियामकारयत् । गतेषु पंचषेषु मासेषु गिरिजा आपन्नसत्वा बभूव । परिचारिकाभि: धात्रीभिश्च संसेव्यमाना यथाकालमप्रतिमसौंदर्योपपन्नं सुतमसूत । अपुत्राणां पुत्रलाभे कियानानंदो जायते इति वर्णयितुं न पारयामि । हर्षोत्फुल्लहृदयौ तौ दंपती पुत्रस्य नामधेयं यथारूढि गणेश इति चक्रतु: । गणेश: यथानुकूलं मातापितृभ्यां परिपालित: वर्षद्वयकालमयापयत् । वर्षद्वयदेशीया: बाला: स्वहास्यमुखेनाव्यक्तवर्णवचोभिश्च मातृ:पितॄन्प्रीणयन्तीति सर्वेषामनुभवसिद्धमेव । धन्यास्तदंगरजसा मलिनीभवन्तीति कालिदासोक्ति: कस्य मनसि पदं न कुर्यात् ।

३ अथ संतोषार्णवे प्लवमानयोस्तयो: पंचषाणि वर्षाणि व्यतीतानि । चक्रवत्परिवर्तन्ते दु:खानि च सुखानि चेति न्यायेनाव्याहतं सुखमनुभवन्त: पुरुषा विरला:। सदाशिवराय: स्वभार्यापुत्रयोस्समागमेन सुखेन कालं नयन्नेकदा विषमज्वरेण पीडित: शय्याशरणो बभूव । गिरिजा तं तथाविधं ज्वराभिभूतं दृष्ट्वा सहजां स्त्रीसुलभां कातरतां विहाय धैर्यमवलंब्य पत्यु: शुश्रूषामतिनिपुणतया चकार । "सुहृद्बन्धुर्भिषग्दासो गुरुर्मन्त्री समाश्रय: । भार्या सर्वास्ववस्थासु विश्रान्तिजननं नृणाम् ॥" इति सुभाषितकारैर्यदुच्यते तत्प्रत्यक्षेणानुभूतं सदाशिवरायेण । बहवो वैद्यास्समानीतास्तं चिकित्सितुं किंतु ज्वरागमे व्यत्ययो नासीत् । येये उपचारा वैद्यैरादिष्टास्ते सर्वेपि द्रव्यव्ययमगणय्य यथाज्ञापिता: तथैव रात्रिंदिवं सिद्धिं नीता: । एवं कष्टमयं कालमनुभवन्त्यातया कानिचिद्दिनानि किमप्याशालेशमलब्ध्वाऽऽयापित । सूचीवेध: औषधप्रदानं प्राणवायुसंसेवनमित्येवमादिभि: प्रयोगै: प्रयतितं वैद्यवरैस्सर्वै: । किंतु कालोपहतस्य नरस्य मानवप्रयत्ना: विफला: । एवं त्रिंशद्दिनपर्यन्तमविरतं चिकित्स्यमान: सदाशिवराय: करालेन कालेनापहृत: ।

४ गिरिजा शोकसागरे निमग्नाऽशरणा किंकर्तव्यमूढा कथंकथमपि

धैर्यमवलंब्य पंचवर्षवयोवस्थं बालकमेकमेवाधारस्थानं मत्वा कालं निन्ये। सदाशिवरायः औदार्येण दानशीलत्वेन च "आपदर्थे धनं रक्षेदिति न्यायं श्रुत्वाऽपि धनसंचये मतिं न चक्रे। अतः तस्य वियोगसमये केवलं सहस्र-रूप्यकात्मकएव धनसंचयः आसीत्। गृहीत इव केशेषु मृत्युना धर्ममाचरेदिति वचनं यथाश्रूयते तथैषधनसंचयोऽपि कार्यः इत्युच्यते चेदतिशयोक्तिर्न स्यात्। अस्माकं सुदैवेन भरतवर्षे प्राणहानिपूरकसंस्थाः बव्ह्यः दरीदृश्यन्ते। मध्यमवर्गीयाणां कर्मकारवर्गीयाणां चापद्धनमिति संग्रहीतुमेताःसंस्थाः अह-र्निशं बद्धपरिकराः वर्तन्ते। बहून्यापद्ग्रस्तानि कुटुंबकान्याभिः संस्थाभिः अनर्थादुद्धृतानीति सर्वेषां विदितचरमेव।

५ अस्तु सदाशिवरायस्यौदार्यस्य लाभं भुंजानाः सुहृदः मरणानंतरं तस्य गृहाभिगमनेऽपि मंदादरा बभूवुः। यावद्वित्तोपार्जनसक्तः तावन्निज-परिवारो रक्तः इति सर्वेषां परिचितमेव। स्वल्पेषु दिनेषु चिकित्सार्थं देयानां रूप्यकाणां पत्रकाणि पृथक् पृथक् वैद्यैः प्रेषितानि। सर्वेषामपि दातव्यानां रूप्यकाणां संख्या उपसहस्रमासीत्। उत्तराक्रियादिकर्मसु द्विशतात्मकं व्ययीभूतम्। "वैद्यः प्राणान्धनानि च हरति" इत्येतद्वाक्यं केषामसहायानां योषितां यथार्थतः न दृश्येत?। एवं सर्वान् देयान्रूप्यकान् वितीर्य गिरिजा केषुचिद्दिनेष्वकिंचनाऽभवत्। अनाथानामकिंचनानां विधवानां गतिः वाचक-महाभागा एव ऊहयन्तु। शोको नाऽऽपत्प्रतीकारः। प्रशान्ते शोकावेगे गिरिजा धृतिमवलंब्य स्वां परिस्थितिं सम्यक्परिज्ञाय कामपि द्रव्योत्पादिकां कलामजानती कस्यापि श्रेष्ठिनः गृहे पाककर्मणि नियुक्ताऽभवत्। स्त्रीणां शिक्षणमत्यावश्यकमिति अर्वाचीनैः प्राज्ञैः जोघुष्यते। एवंत्वेऽपि पुण्यपत्तन-सदृशानि पत्तनानि विहायान्येष्वल्पीयस्सु पत्तनेषु ग्रामेषु वा स्त्रीशिक्षणस्य न तादृशी प्रगतिर्जाता। पुनरपि महदाश्चर्यं यत्स्त्रीशिक्षणविरोधिनः इतस्ततः दृष्टिपथमायान्ति।

६ शारीरिकाणां मानसिकानां च दुःखानां काल एव न्यूनीकरण-

क्षमः । स्वतंत्रं सुखकरं जीवनमास्वाद्यानंदेन जीवंतीनामबलानां परसेवा-मरणादतिरिच्यते । किंतु आपतितस्य दुःखस्य सहनाद्विनाऽन्यागतिर्नास्ति । तादृक्सेवासुलभाः अपमानाः गिरिजया जोषंभावेन सोढाः । विरलाः श्रीमंतः ये अनुजीविनः यथाधर्मं पश्यन्ति । आत्मनः बालकस्य कृते अनल्पान्यपि दुःखानि सोढास्मि । मम प्रियपुत्रः पाठशालां गत्वा सुधीर्भविष्यति । अचिरादेव कुत्रापि राजसेवां लब्ध्वा सुखी भविष्यति मामानंदयिष्यति च । एते मनोरथाः तस्याः दुःखभारं सह्यं चक्रुः ; आगामिसुखं चिंतयतः कस्यापि प्रकृतं दुःखं तृणायते ।

७ गिरिजा तस्य श्रेष्ठिनः गृहस्य निकट एव स्ववासं कृत्वा बालकमतीव प्रेम्णा संवर्धयामास । गणेशः बालोऽपि प्रकृत्या मेधावी स्वल्पेनैव कालेन पाठशालायां स्ववर्चसा सर्वेषु शिक्षकेषु प्रोत्साहनीयः विद्यार्थिषु चादरणीयो बभूव । शालेयं जीवनं च सुखमयं मेने । किंतु गृहे मातुरकिंचनत्वमसहायत्वं परावलंबित्वं च दृष्ट्वा परं विषादमगमत् । श्रेष्ठिनः गृहे वेतनमिति प्राप्तेषु दशरूप्यकेषु तयोः निर्वाहः समभवत् । एकदा वर्षासु गणेशः सवयस्कैर्मित्रैर्जलक्रीडनार्थं समीपवर्तिनं तडागमगच्छत् । बहुकालपर्यंतं विहरन्भृशं क्लिन्नः यथाकालं फुप्पुसज्वरेण पीडितः शय्याधीनो बभूव । गण्डस्योपरि पिटकः संवृत्तः इतिन्यायेनादावेव दुःखिता सा पुत्रस्यानपेक्षितां रुजं दृष्ट्वा वज्रहतामिवस्थितिं प्रपेदे । श्रेष्ठिनः गृहं गन्तव्यं नो चेद्वेतनं न लभ्यंत, सेवायाः विसर्जनभीतिश्च । अत्र गृहे रुग्णं पुत्रमेकाकिनं विहाय गन्तुमक्षमा कथंकथमपि प्रतिवेशिनः साहाय्यं लब्ध्वा स्वसेवानिरताऽभवत् ।

८ श्रेष्ठिनः गृहस्थस्य योषित. तां तथाविधां स्वकार्ये शून्यमनस्कां विविधैरुपालंभैरध्याक्षिपन् । महदपि परदुःखं शीतलं सम्यगाहुः । दरिद्राणां दुःखानि श्रीमंतः ऊहितुमपि न प्रभवन्ति किं पुनः सहानुभूतिं दर्शयितुम् । एवमेकसप्ताहपर्यंन्तमसह्यं देहायासं सोढ्वा स्वपुत्रस्य संगोपनं कारयामास ।

सुदैवेन सुचिकित्सया च गणेशः विगतज्वरः ईषदीषन्निरामयोऽभवत् । क्लेशः फलेन हि पुनर्नवतां विधत्ते इति कालिदासोक्तिमनुसृत्य गिरिजा पुत्रस्य स्वास्थ्यलाभेन नवचेतनामलभत । मातरः स्वापत्यविषये कीदृशं स्वार्थत्यागं कुर्वन्तीति प्रायः सर्वैरनुभूयते ।

९ गच्छता कालेन गणेशः प्रवेशपरीक्षायां प्रथमस्थानं प्राप्य बहूनि पारितोषिकानि शिष्यवृत्तीश्चालभत । प्रतिमासं शतरूप्यकात्मकं शिष्यवृत्तिं संपाद्य मातरं सेवाविरहितां कारयामास । महाविद्यालयेऽपि सर्वासु कक्षासु प्रथमश्रेणिं प्राप्य स्वमातरमानंदार्णवे प्लावयामास । पंचदशवर्षपर्यंतं परं कष्टमनुभवत्याः पुत्रस्य श्रेयः अंधकारे दीप इव बभौ । मुदितमानसा गिरिजा पुत्रस्य यशसि सुखमनुभवंती कतिपयानि वर्षाणि तत्सेवातत्परा न्यवसत् । गणेशः महाविद्यालये सर्वाः परीक्षाः उत्तीर्य एम्. ए. परीक्षायां प्रथमस्थानमलभत । आंग्लदेशे शिक्षणार्थं द्वित्राः शिष्यवृत्तीः आसादितवान् । आंग्लदेशगमनसंलापाः प्रथमं हर्षावहाः अपि पुत्रवियोगकल्पनया तां दूयमानहृदयां चिंताकुलां चाकुर्वन् । गणेशः मातुः सर्वमपि व्यवस्थापनं मित्रस्यैकस्य गृहे कृत्वा स्वल्पैरेवाहोभिः धूमनौकया आंग्लदेशगमनाय सज्जो बभूव । परदेशगमनस्यानुज्ञापत्रमपि लीलयैवानेन लब्धम् ।

१० प्रतिशनिवारं आंग्लदेशगमनाय शतशः स्त्रीपुरुषाः मुंबापुर्याः नौकाश्रये संकुला भवन्ति । केचन जिगमिषवः, केचन संबंधिनः मित्राणिच केचनानुजीविनः लेखकाश्च स्वान्मुख्याधिकारिणः प्रस्थानसत्कारार्थं मालागुच्छादिभिरुपेताः प्रेक्षकस्य दृष्टिपथमायान्ति । केषां भाषणानि केषामाक्रंदनानि, केषां हास्यानि, केषां स्मेरमुखानि, केषां खिन्नवदनानि इत्येतानि हृदयद्रावकानि दृश्यानि दृष्ट्वा जगति न कोऽपि सुखी वर्तत इति प्रत्ययो जायते सर्वेषाम् । सर्वे जिगमिषवः परदेशगमनस्यानुज्ञापत्रकं दर्शयित्वा धूमनौकामारूढाः । निर्दिष्टे काले धूमनौका मुंबापुर्यास्तीरम मुंचत् । धूमनौकायामांग्लदेशप्रवासः अतीवाल्हादकरः । सर्वाण्यपि सुखसौकर्याणि तत्र वर्तन्ते । सर्वेषामपि विहारा-

णामेकभाजनं सा नौका वर्तते । एवं विविधैर्विहारैः संलापैश्च कालं नयन् पंचदशदिनै रांग्लदेशं प्राप्नोत् ।

११ आंग्लान्ववाये शुल्कप्रदानेन अभ्यागत इति भारतीयाः वसन्ति । तदनुरोधेन गणेशः कस्मिंश्चिदन्ववाये स्थित्वा आय, सीः एस्. परीक्षार्थमध्ययनमकरोत् । द्वित्रैर्वर्षैस्तां परीक्षामुत्तीर्य भारतवर्षे कस्यापि मंडलस्य मुख्याधिकारीति नियुक्तः । आंग्लदेशवासः यस्य कस्यापि यूनः मनसि विक्रियां जनयति । गणेशोऽपि यौवनसुलभान्विलासाननुभूय स्वदुःखार्तां मातरं विसस्मार । स तत्र मांसभक्षणमद्यपानादि पापकर्मसु निरतो भूत्वा मोहाविष्ट एकामांग्लयुवतिं पर्यणयत् । नियोगस्याज्ञापत्रं तत्रैव गृहीत्वा सपत्नीकः भरतवर्षं प्रनिर्निर्ययौ । सप्तपुरमण्डलस्य मुख्याधिकारीति नियुक्तः स्वान्यधिकारसूत्राणि यथाकालं जग्राह । गृहव्यवस्थापनादिकार्याणि समाप्य मातरं स्वगृहमानाययामास । मातुः कृते भोजनसौकर्यादीनि पृथक् कृत्वा तां सुखिनीं कर्तुं प्रायतत । किंतु गच्छता कालेन भार्यायाः प्रभावेण मातरमुपेक्षत । यत्सत्यं सुभाषितकारैरुक्तं । " कृतार्थः स्वामिनं द्वेष्टि, कृतदारश्च मातरम् ॥ जातापत्या पतिं द्वेष्टि, गतरोगश्चिकित्सकम् ॥ " इति

१२ एवं कानिचिद्दिनानि व्यतीतानि । असकृदवज्ञातायाः तस्याः पुत्रमेकं विहाय न केऽपि सुखहेतवः आसन् । अहो मातुः हृदयम् । मातुः पुत्रवात्सल्ये हृदयस्य सर्वानप्यनुरागानतिरिच्यमाणा स्निग्धता वर्तते । मातुः प्रेमा स्वार्थेन नोद्विज्यते, नच कृतघ्नतया दुर्बलायते । पुत्रस्वास्थ्याय मात्रा सुखसर्वस्वं पणीक्रियते । आपत्काले मातरमंतरा न कोपि प्रियतरः भवति इह जगति । अखिलेन जगता निराकृतस्यापि पुत्रस्य माता एव प्रेमास्पदं बवति । अथाधिकारेण यौवनेन धनेन च प्रमत्तः गणेशः आंग्लभार्यया सह कंचित्कालंनिनाय । कुपुत्रो जायते क्वचिदपि कुमाता न भवति । तस्य माता वार्धक्यमप्राप्तापि चिंताकृशशरीरयष्टिः केनापि ज्वरेण ग्रस्ता त्रिदिवं गता । सुखे निमग्नस्य तस्य मातुः निधनेन न कश्चिदपि व्यत्ययोऽभवत् ।

१३ गणेशः प्रथमं भार्यायां भृशमस्निह्यत् । किंतु गच्छता कालेन तयोः कलहः समजनि । पत्न्याः अतिव्ययः, परपुरुषाणां सहवासः, भर्तुरुपेक्षा इत्यादिना भृशं क्लिष्टः जीवितं दुःखमयं मेने । कतिपयैर्मासैस्तयोः घटस्फोटेन विप्रयोगोऽभूत् । समानकुलशीलव्यसनेषु विवाहः कल्पते, नो चेदीदृशीमवस्थां नरः प्राप्नोतीति वक्तुं न काऽपि विप्रतिपत्तिः । मिश्रविवाहोद्भवाः एतादृशा अनुभवाः इतस्ततः सर्वैरपि दरीदृश्यन्ते ।

१४ मातुः वियोगेन भार्यायाः विप्रयोगेन स्वप्रमादात्संज्ञामलभत । प्रनष्टे रुदितेन किम् ? । मातरमहर्निशं चिंतयन्नायुः धनं च विद्याप्रसाराय, दनिानां साहाय्याय, रुग्णानां परिचर्यार्थं व्ययीकुर्वन्मनसः शान्ति लेभे ।

---

# जलमेषयन्त्रम् ।

## (HYDRAULIC RAM).

लेखकः—दिनकर बा. परांजपे,
पोस्ट डेक्कनजिमखाना, पुणें ४.

यन्त्रमिदं जलोद्धरणार्थमुपयुज्यते । यत्र कुत्रापि वहमानं जलं संभवति तस्मिन्स्थले इदमुपयुक्तं खलु । अस्य ऱ्हस्वं नाम तु " जलमेषयन्त्रम् " । परं सुदीर्घं व्यक्तिकारि वार्तिकं नामापेक्षितं चेत् तर्हि तदेवं भवेत् " वहज्जलक्षणिकनिरोधनजातोर्जःप्रचेदितं जलोद्धारकं जलमेषयन्त्रम् " । अस्मिन्सुदीर्घनाम्नि यन्त्रस्य वर्तनतन्त्राणि विद्यन्ते यथाधो दर्शितम् । अस्यार्थे प्रथमं वहज्जलमावश्यकम् तद्विनैतन्न चलेत्कदापि । तदुपरि तज्जलस्य

क्षणिकनिरोधनं भवितुं योग्यम् परं यन्त्रे एवेदम् साध्यते । निरोधनात् यदूर्ज उत्पद्यते तदेवास्य प्राणाः यन्त्रचोदने समर्थाः । आस्ताम् तावत् ।

अत्र मया स्मर्यते बाल्ये पाठ्यपुस्तके पठितः "त्रयो राक्षसाः" नाम पाठः । प्रथमराक्षसो बाष्परूपः द्वितीयो वातरूपस्तृतीयो जलौघनामा । अस्मदाग्निरथा विचरन्ति बाष्पे "जनेन" तथाहि सागरगामिन्यो नावोऽपि । अपि पुनरेतर्हि वस्त्रनिर्मितिकार्यालयसदृशकार्यालये बाष्पोत्पन्नचोदना विद्यत इति सुविख्यातमस्ति । वातराक्षसविषये वक्तव्यं तर्हि प्रायः शताधिकवर्ष-कालात् प्राक् सागरसरिद्गामिन्यो नाव. सर्वाहि वातेरिताः सन्तिस्म भूतले । साम्प्रतमेतत् परिवर्तितं तत्तु अन्यत् । पुण्यपत्तनसदृक्पुरेषु श्रीमन्तो जनाः कूपजलोद्धरणाय वातचक्रचोदितजलोन्नायिनीः (पंप) नियोजयन्तिस्मेति जनैः प्रत्यक्षीकृतमस्ति ।

तृतीयो राक्षसो जलौघ एनमधिकृत्य विस्तरेण वच्मि । एष ननु जलमेषयन्त्रस्य प्राणभूतोऽस्ति । स विधात्रा लोकहितकांक्षया कर्मचिकीर्षुः सेवक इति कल्पितः । परं स नित्यं नियन्त्रणमर्हति । अनियन्त्रितावस्थायां स मत्तो जनानामहिताय चेष्टते । यथा वर्षाकाले नदीतीरवृक्षोच्छेदनं वा लोहमार्गस्थितसेतूत्पाटनं स करोति । कतिपयमासेभ्यः प्राक् पुण्यपत्तनस्थैः पानीयजलदुर्भिक्षमनुभूतम् । कुत इति चेत् पर्वतिदेवालयपदस्थकुल्यायास्तटं जलौघो वर्षतौमत्तावस्थायां बभञ्ज । इतिकारणात् भग्नतटसमीकरणपर्यन्तं सा सारणिर्जलशून्या प्रावर्तत । अतः पुण्यनगरे पानीयजलसंकोचोऽजनिष्ट । एतन्निमित्तं विज्ञानप्रचुरे काले संप्रति स्थूलप्रपाताभा जलौघा निगडिताः सन्तो विद्युज्जनने आज्ञप्ताः प्रायः टाटामण्डलसदृग्भिः । एवं शतक्रोश-विस्तीर्णभूप्रदेशा विद्युद्दीपिता भवेयुः । संप्रति खोपोली भाटघरमेट्टूरशिव-समुद्रंप्रभृतिस्थानानि ख्यातानि विद्युदुत्पादने ।

उपरिलिखितवृत्तादेवं न मान्यम् यद् महान्तो जलौघा एव कार्यसमर्था इति । हिमालयप्रान्ते बदरीनाथादियात्रामिषेण विचरन् अहं स्थले स्थले

मन्दाकिन्यलकनंदादिसरिज्जलप्रवाहचालितानि वारिचक्राणि धान्यपेषणे नियुक्तानि बहून्यद्राक्षम् । धान्यपतिः सायमेकां धान्यपूर्णां गोणीमुद्बध्नाति धान्यपेषण्युपरि यथा अल्पं धान्यं मन्दंमन्दं पेषणार्थं पतेत् । प्रत्यूषे आगत्य विलोकयति तावत्सर्वं धान्यं पिष्टं निष्ठायुतेत रात्रिंचरेण रक्षसा । अहोऽस्मिन्पत्तनेऽपि वारियन्त्रधान्यपेषण्यौ द्वे तर्हि स्तः स्म । एका लकडीपूलाधः द्वितीया बंडगार्डनसविधे । अधुना एवंविधाः पेषण्यस्तैलयन्त्रेण तथा विद्युद्यन्त्रेणापसारिताः प्रायः । अस्तु खल्वैतद्विषयान्तरं क्रमप्राप्तमपि ।

अधुनोपरिवर्णितकार्यवृन्दाजलौघरक्षस एकं सविशेषं कार्यं विवृणोमि किंहेतोरिति चेत् निभालयत मतिमत्तमाः प्रियवाचकाः ।स्तेदेवाद्यतनीयविवादविषयीभूतं " जलमेषयन्त्रस्य " प्राणभूतं तत्त्वम् । वहमानजले कृतसंपादनोर्जो वर्तते एव । विनोर्जो जलं न वहेत् । पुनर्जलं सदैवोच्चस्थानादधो वहति न कदा विपरीतम् ।

जले शक्तित्रयं वर्तते । प्रथमा स्थानमाहात्मिका शक्तिः । द्वितीया शक्तिर्वहमाने जले गतिस्वरूपा । तृतीया प्रवेगात्मिकाऽऽवेगरूपा । पुनरेतदवधार्यतां मनसि शक्तित्रितयमेतत् परस्पररूपान्तरभवनक्षममस्ति । यथा जलमेषे स्थानमहात्म्यिका शक्ति र्गतिरूपा भवति । परं यदा तद्वहज्जलस्य क्षणिकानिरोधनं तद्यन्त्रे जायते तदा गतिरूपा शक्तिरावेगरूपा भवति । एवं सर्वकालं यावद् यन्त्रं चलति तावत् प्रतिक्षणं जायते रूपान्तरम् कथं । नु सकलमेतत्सम्पद्यते तदधोलेखने विवृणोमि ।

**यन्त्ररचना तथा तद्वर्तनतन्त्रम्**—कुल्याया जलं वा सरिज्जलं यन्त्रभाण्डेऽस्मिन्कयाचिन्नलिकया प्रविष्टं भवति । अस्मिन्यन्त्रे प्रामुख्येन द्वे द्वारे विद्येते । एकमन्तर्वर्ति यत् स्वभावतोऽर्धोन्मीलितं यच्च निर्माल्यजनमोक्षद्वारं वा संक्षेपतो निर्माल्यद्वारमिति कथ्यते । द्वितीयं द्वारं बहिर्वर्ति यत्खलु स्वभावतः प्रायः पिहितं तस्य नाम तावद् भोग्यजलद्वारम् । भोग्यजलद्वारस्योपरि रिक्तं शून्यं वायुभाण्डमपि वर्तते यद् भाण्डतो निर्गच्छति

भोग्यजलनालिका भोग्यजलकुण्डं प्रति। इति यंत्ररचना। अधुना कथ्यते वर्तनतन्त्रं यन्त्रस्य।

यदा कुल्या सरितो वा बहुजलं यन्त्रभाण्डे प्रविशति तदा तज्जलमर्धोन्मीलितद्वारतो निर्माल्यमिति बहिर्निस्सरति। परमस्मिन्नेव क्षणेऽर्धोन्मीलितं तद्द्वारं पूर्णं निमीलति झटिति। **इदं वृत्तं हि यन्त्रस्यास्य बीजरूपं तंत्रम्।** यथा अर्धोन्मीलितद्वारेण बहवो गृहमध्ये स्थिता जना एकैकशः पङ्क्तिपद्धत्या बहिर्गन्तुं शक्नुयुः। परं यदि विवेकरहिता भूता (आधुनिक "क्यू" रीतिं परित्यज्य) एकक्षणे एव द्वारतः निर्गन्तुं यतेरन् तदा तद्द्वारं निमिषार्धात पिहितं भवति इति जानन्त्येव श्रीमन्तो नित्यानुभवात्। एवंरीत्या यदा बहवो जलकणा एकक्षणे निर्गमनमिच्छन्ति तदा तन्निर्माल्यद्वारं संवृणोति। तस्मिन्क्षणे प्रवेगाविष्टास्ते द्वितीयं स्वभावतः पिहितं भोग्यजलद्वारं आस्फोटयन्ति यथा तदपावृतं भवेत् तदनु ते जलकणा वायुभाण्डे प्रविश्य ततो भोग्यजलकुण्डं यथाकालं प्राप्नुवन्ति। पश्चात् पुनर्जलस्य क्षीणावेगत्वात् तद् क्षणमात्रमपावृतं भोग्यजलद्वारं तदात्वे एव पिधत्ते। पुनश्च तदर्धोन्मीलितस्वाभाविकीमवस्थां प्राप्नोति निर्माल्यद्वारम्। एवमेवं प्रचलति तस्मिन् यन्त्रे यावत्प्रवाहजलं यन्त्रेऽस्मिन्प्रविशेत्।

रिक्तवायुभाण्डस्थो वायुर्नूत्नजलागमे स्वतः अंशतः संकोचति परं क्षणान्तरे नूत्नजलस्य अनागमने स्वयं प्रसरति तथा किंचन जलं भोग्यकुण्डे प्रेषयति। एवंविधिना जलस्य भोग्यजलकुण्डं प्रतिगमनं समीभवति स्थूलमानेन। उपरि वर्णितं यन्त्रवर्तनतन्त्रम् प्रयोगं विना सम्यग् ज्ञातुं न सुशकं खलु। अस्तां तावत्।

पुण्यपत्तने इदं यन्त्रमस्ति पर्वतिदेवालयाधःस्थितकुल्यायामुच्चैः स्थितदेवालये जलप्रेषणार्थम्। द्वितीयमस्ति खडकवासलासे तु निकटे अधिकारिंजनानामाश्रमे जलनयनार्थम्। अपि द्वेऽधिके वर्तेते कृषिमहाविद्यालये तथा-

स्थापत्यविद्यालये छात्राणां प्रयोगीकरणार्थे ।

**तथाहि "जलमेषयन्त्रम्" इति नाम कुतः ।** उत्तरे कथनीयं यथा मत्तमेषः येनकेन वस्तुना सह आघातयति तथा प्रवाहस्य क्षणिकनिरोधनेन क्रुद्धं भाण्डस्थं जलमावेगभराद् भोग्यजलद्वारं प्रत्याघातयति तदुदद्घाटयतेऽपि । प्रायः येन कल्पकेन यन्त्रमिदं प्रथमं रचितं तस्य मनसि मेषसादृश्यं हि प्रविष्टं स्यात् । तदर्थे "जलमेषं" इति नाम प्रसिद्धिमगमत् इति मन्ये ।

अथ **गणितविषयगतं यन्त्रस्य** ज्ञानमेतावत् । **शास्त्ररीत्या** लब्धं समीकरणं हिः—( निर्माल्यजलं × पातेन ) = ( भोग्यजलं ×
( हतं ) (हतं)

तस्मात् भोग्यजलं = ( **निर्माल्यजलं × पातेन** )
उच्छ्रायेण

यन्त्रस्य गुणगानमधुनाल्पांशेन कृतम् । इदमेकवारं सुस्थापितं चेत् यावज्जलप्रवाहो वर्तते तावत्स्वयमेव निष्ठापूर्वं चलेत् । तन्नेहते कमपि निरीक्षकं न विस्तृतं गृहं न तैलं नेन्धनमपि । तन्नवमतिधूम्रं नावकरं तथा । इदं साधर्म्यमाविष्करोति बहुदुग्धन्हस्वशृंगाल्पमूल्यधेन्वा सह स्थूलदृष्ट्या । विनाधिकद्रव्यव्ययेन तद् दिनरात्रं स्वयमलक्षितं स्वकर्म कुर्यात् । आस्तां तावत् इतिशम् ।

---

## दाक्षिणभारतीयसंस्कृतसाहित्यपरिषत्संस्थाया

# नियमावलिः

१ नाम— संस्थेयं दक्षिणभारतसंस्कृतसाहित्यपरिषद् नाम्ना व्यपदिश्यते ।

२ कार्यक्षेत्रम् परिषदः अस्याः दक्षिणेन विंध्याचलम् आकन्याकुमारि महाराष्ट्र—कर्नाटक—आंध्र—द्रविड—केरल—प्रान्तगर्भितः संस्थानसहितः समग्रो दक्षिणभारतदेशः कार्यक्षेत्रतया परिगण्यते ।

३ उद्देशः (क) संस्कृतभाषायाः तथा संस्कृतसाहित्यस्य भारतीयसंस्कृतेरपि सर्वविधाभ्युन्नतये सर्वथा प्रयतनम् (ख) प्रतिप्रान्तमुपपरिषदां प्रतिष्ठापनेन तत्तत्प्रदेशेषु संस्कृतभाषाप्रचारकरणम् । (ज) तत्रतत्र संस्कृतपाठशालानां तथा वाचनालयानां संस्थापनम् (घ) प्राचीनसाहित्यसंग्रहः नवीनसाहित्यनिर्मितिः तेषां मुद्रणं प्रकाशनं तथा प्रत्रिकाप्रकाशनं च । ङ) शास्त्रीयपारिभाषिकशब्दानां तथा लौकिकव्यावहारिकशब्दानां निरुक्तव्याकरणानुगुण्येन अभिनवशब्दकोशविरचनम् । (च) भाषांतरेषु वर्तमानानाम् आधुनिक—वैज्ञानिक—ऐतिहासिक—भौगोलिक—संशोधन—विमर्शात्मक—विविधग्रंथानां संस्कृतभाषायां परिवर्तनेन प्रकाशनेन च संस्कृतसाहित्यपरिपोषणम् (छ) संस्कृतसाहित्ये विविधाः कक्ष्याः परिकल्प्य तत्रतत्र परीक्षाकेंद्राणि संस्थाप्य तद्द्वारा परीक्षोत्तीर्णानां छात्राणां प्रमाणपत्रपारितोषकवितरणेन प्रोत्साहनम् (ज) विश्वविद्यालयेषु तथा शासनसंस्थासु संस्कृतसाहित्यस्य पुरस्काराय प्रचोदनम् (झ) यद्यत्संस्कृतसाहित्यस्याभिवृद्ध्यर्थं

निर्दिष्टविषयाणां सिद्धये च आवश्यकमौपयिकं च समये परिज्ञायेत तस्य तस्योपायस्य अंगीकरणम् ।

( ४ ) अस्याः परिषदः उद्देशसाधनाय अपेक्षितस्य स्थावरजंगमात्मकस्य धनस्य संग्रहः रक्षणं वर्धनं च

## सदस्याः

( ५ ) अस्याः परिषदः निम्नलिखिताः विविधाः सदस्या भवंति.

| | |
|---|---|
| १ पोषकाः | सहस्र १००० रूप्याणां तदधिकस्य वा धनस्य दातारः |
| २ आश्रयदातारः | ५०० रूप्याणां तदधिकस्य वा दातारः |
| ३ संरक्षकाः | २६० रूप्यांणां तदधिकस्य वा दातारः |
| ४ आजीवसदस्याः | १०० रूप्याणां तदधिकारस्य वा दातारः |
| ५ सामान्यसदस्याः | प्रतिवर्षं रूप्यकत्रयदातारः |
| ६ सम्मानितसदस्याः | कार्यकारिणीसभया मानिताः |
| ७ अभिमानिनः | आणकचतुष्टयादारम्य रूपकत्रयाद् न्यूनधनदातारः |

( ६ ) परिषदः अधिवेशनादिनात् मासात् पूर्वमेव स्वीयमावश्यकं ( रूप्यकत्रयादन्यूनं ) शुल्कं प्रदाय ये सदस्या भवेयुः त एव मताधिकारिणो भवंति । अधिवेशनपर्यन्तमदत्तशुल्कधनाः प्राचीनसदस्या मतदाने नाधिकुर्वंति ।

( ७ ) अस्याः परिषदः कार्यनिर्वहणाय कार्यकारिणीसमितिः विधेया । तस्यां घटकाः १ कार्याध्यक्षः, २ उपाध्यक्षौ, १ सम्मेलनाध्यक्षः, २ कार्यदर्शिनौ षट् सदस्याश्च ।

( ८ ) प्रतिवर्षं परिषदः कार्यक्षेत्रप्रदेशे अनुकूलस्थले का. का. समित्या वार्षिकं साहित्यसम्मेलनं विधेयम् । तस्मिन्नेव समये अस्याः परिषदो वार्षिकी साधारणसभापि आमंत्रणीया । तस्यां सभायां प्रतिवार्षिकी कार्यकारिणी समितिर्निर्मातव्या । नूतन का. का. समितिनिर्माणपर्यन्तं पूर्वतनी का. का. समितिः परिषत्कार्यं निर्वहेत् ।

(९) वार्षिकसाधारणसभायाः कर्तव्यानि

[ क ] का. का. समितेर्विवेचनम्

[ ख ] अतीतवर्षस्य आयव्ययपत्रिकायाः परिशीलनम् ।

[ ग ] आगामिवर्षस्य आयव्ययपत्रिकायाः अनुमोदनम् ।

[ घ ] वर्षपर्यंतं कर्तव्यस्य कार्यजातस्य समान्यतो निर्धारणम् ।

[ ङ ] अध्यक्षानुमत्यनुसारेण इतर विचारविषयविचार इति ।

(१०) आवश्यकत्वे प्रदेशांतरे परिषदो विशेषसभामपि आमंत्रयितुं का. का. समितिः प्रभवति । तुर्यांशसदस्यानामुपस्थितिरावश्यकी.

(११) का. का समितेः सम्मेलनस्य कार्यक्षमत्वे पंचावराणां सदस्यानामुपास्थितिरावश्यकी । परं सदस्यानामनुपस्थित्या पुरस्सारितसम्मेलनार्थे सदस्यसंख्यानियममो नापेक्ष्यते.

(१२) सप्ताहात् प्रागेव प्रत्येकं सदस्येषु आमंत्रणपत्रिका प्रेषणीया तत्र स्थान–दिवस–विषय–कालाः निर्देष्टव्याः । का. का. समितेः सम्मेलनदिनात् सप्ताहात् पूर्वमेव कार्यदर्शिना विचारणीयविषयमालिका प्रत्येकं सदस्येषु प्रापणीया ।

(१३) सम्मेलनाधिवेशने तथा परिषदोऽधिवेशने च निर्णीतानां सर्वेषां विषयाणां निर्वाहः तथा परिषद उद्देशसिद्धये अपेक्षितेतरसर्वविधोपायस्वीकारश्चेत्युभयमपि का. का. समितेः कर्तव्यं भवति । एतत्कार्यसंपादनाय परिषदा यावदनुमतं द्रव्यं व्ययितुमपि का. का. समितिः प्रभवति ।

(१४) अस्याः समितेः प्रधानकार्यालयः विजयपुरे एव भवति ।

(१५) सर्वाण्यपि परिषदः कार्याणि परिषन्नाम्नैव निर्वाह्यानि ।

(१६) कार्यकारिणी समितिः प्रतिवत्सरं साहित्यसम्मेलनार्थं निर्णीतस्थले तत्रत्यसंस्कृतप्रणयिभिः स्वागतसमितिमचिरात् कारयेत् ।

(१७) स्वागतसमितिः सम्मेलनाध्यक्षपदस्य कृते तदर्हतां पंचानां नामधेयानि का. का. समितिं संसूचयेत्। का. का. समितिः तेषु अन्यतमं निर्धारयेत् च। सर्वमेतत् सम्मेलनदिनस्य मासात् प्रागेव निर्वर्तयेत्।

(१९) वार्षिकसम्मेलनसमनंतरं मासत्रयाभ्यन्तरे स्वागतसमितिः सम्मेलनस्य आयव्ययपत्रं का का. समितये समर्पयेत्, प्रकटयेच्च। व्ययावशिष्टे सम्मेलनार्थं संगृहीते द्रव्ये चतुर्थांशं परिषदो निधिं प्रापयेत्। अवशिष्टं धनं तत्प्रान्ते संस्कृतप्रचारार्थे उपयोगं कुर्यात्।

(२०) परिषदः उद्दिष्टकार्याणि निष्प्रतिबंधं निर्वाहाय पूर्वोक्तनियमाविरोधेन उपनियमान्निर्मातु का. का. समितिः प्रभवति।

---

## देवनगरे [डावणगेरे] श्रीमदानन्दतीर्थ-

# भगवत्पादाचार्याणामुत्सवः

देवनगरे "श्रीसर्वज्ञसेवासंघ" नाम्नी संस्था प्रतिवत्सरं श्रीमध्वनवमीमारभ्य आत्रयोदशि श्रीमदाचार्यसिद्धांततत्वावबोधकविविधप्रवचनोपन्यासादिकार्यक्रमेण महोत्सवमिदं निर्वर्तयति। संस्थया विशाले प्रकाशपवनसलिलादिपरिशुद्धे प्रदेशे श्रीमध्वराजमंदिरं सुन्दरं नूतनं निर्मितं तदुद्घाटनमहोत्सवः एतत्पार्थिवसंवत्सरे श्रीमज्जयतीर्थपंचम्यां महता समारंभेण कृतश्च। एतस्मान्नगरात् पंचमैलान्तःप्रदेशे "कडलबाळ" इति कश्चन ग्रामः। समुद्रबाल इति संस्कृतभाषायां नामास्य भवति। अर्थात् भगवतो दाशरथेः श्रीरामचंद्रस्य संदेशं जनकनान्दिन्यै समर्पयितुं यः कपिवरो हनूमान् शतयोजनं विस्तृतं सागरमुपुप्लुवे तेन कारणेन समुद्रबाल इति नामास्य प्रथितमिति वदंति। ग्रामेऽस्मिन् भक्तवरो

हनूमान् भीममध्वरूपाभ्यामुपेतो रामकृष्णवेदव्यासात्मभिर्भगवद्रूपैरुपशोभितो दिव्यमंदिरे भक्तेष्टकामनां परिपूरयन् शिलान्तर्गतरूपेण विभ्राजते। श्रीमध्वनवम्यां रथोत्सवो महता जनसमूहेन बहुकालादारभ्य प्रवर्त्यते। रथसप्तमीमारभ्य श्रीमध्वनवमीपर्यंतं तत्र विदुषामुपन्यासा धर्मग्रन्थपारायणं ब्राह्मणभोजनादि कार्यक्रमः श्रीकडलवाळ सेवासंघेन प्रवर्त्यते। अग्रिमे वत्सरे संघस्यास्य रजतमहोत्सवो भविष्यति च।

वत्सरेऽस्मिन् श्रीमध्वराजमंदिरे देवनगरे श्रीमध्वनवम्यां प्रातः शिवमुखक्षेत्रवासिनां (शिवमोगा) पण्डितप्रवराणां वाल्मीकिगोपालाचार्याणमुपन्यासः श्रीमध्वचरित्रमुद्दिश्य सम्यक्तया विहितः। ततो दशम्यां सायं पंचवादनावसरं कुमारव्यासनाम्ना सुप्रसिद्धस्य कर्णाटककविपुंगवस्य श्रीनाराणार्यस्य कृतेर्भारतस्य प्रवचनं प्रख्यातयशोभिर्भारतबिन्दुराव इति सुप्रसिद्धैश्चित्रदुर्गनिवासिभिः कृतं सभास्तारानानन्दयत् प्रथमम्। ततो विजयपुरनिवासिनो व्याकरणशिरोमणयः साहित्यवेदांतविद्वांसो विविधविषयावगाहनविशदमतयो द. भा. सं सा. सम्मेलनसंस्थाकार्यदर्शिनः श्रीउडुपीसीतारामाचार्याः श्रीविष्णुतत्त्वनिर्णयनाम्नो ग्रन्थरत्नस्य भावं सुबोधकं यथा स्यात्तथा न्यरूपयन्। श्रीमदाचार्याणां वैशिष्ट्यमितरासधारणमनुपमं बेळगांवनगरनिवासिनो मधुरवाणीसंपादकाः संस्कृतसाहित्यभूषणाद्यनेकबिरुदालंकृता बुर्लीश्रीनिवासाचार्याः प्राबोधयन् सभ्यान्। माघशुक्लैकादश्यां पुनः सायं प्रथमतः कर्णाटकभारतवाचनं ततो धारवाडनगरस्थानां पुराणप्रवचनप्रथितयशसां कित्तूरहुच्चाचार्याणामुपन्यासः ततो गलगलीक्षेत्रवासिनां मधुरवाणीसहसम्पादकानां संस्कृतसाहित्यसुधाकराणां सरसगद्यपद्यरचनाचातुरीविस्मापितसभ्यचित्तानां पण्ढरीनाथाचार्याणामुपन्यासः श्रीशंकराचार्याणां वैष्णवत्वविषयमुद्दिश्य समभूत्। द्वादश्यां नंजनगुडक्षेत्रवासिना सुप्रसिद्धानां विद्वद्वराणां दुर्गदश्रीभीमाचार्यवर्याणां वेदांततत्त्वमुद्दिश्य उपन्यासः सर्वानानन्दयत्। रुक्मिणीस्वयंवरमुद्दिश्य पुराणं श्रीमतां हुच्चाचार्याणामतितराम् आल्हादकरं समभूत्। त्रयोदश्यां भारतवाचनमारभ्य सर्वेषामप्युपन्यासाः सरससरसा रात्रौ द्वादशघण्टावादनपर्यंतमभुवन्। ततः श्रीविजयपुरनिवासिना

निवृत्तमाण्डलिकवरिष्ठन्यायाधीश्वरपदानां असुण्डीश्रीमदनंतरायमहोदयानां भगवद्गीताविषयक उपन्यास उतमतया अभवत्। ततः सर्वज्ञसेवासंघाध्यक्षा विविधोत्तमग्रंथरचनाविख्यातकीर्तयः सुप्रसिद्धा वाक्कोला बी. भीमरावमहोदयाः सर्वान् धन्यवादपुरस्सरमभिनंदंतः सुरभिकुसुगमालातांबूलदक्षिणाभिः सममानयन्। एवममन्दानन्दहेतुर्महोत्सवः समाप्तिमगात्।

श्रीसर्वज्ञसेवासंघस्य प्रधानाः सर्वे सदस्याः कार्यदक्षा महता उत्साहेन संभृताः अभ्यागतानामामंत्रितानामुपस्थितानां सर्वेषां विद्वद्वराणां तथा अन्येषामपि प्रेक्षकादीनाम् निवास–स्नान–भोजनादिव्यवस्थामतिशयेन सम्यक्तया अन्वतिष्ठन् इति सहस्रशो धन्यवादाभिनंदनान्यर्हंति। भगवान् भक्तवत्सलो भारतीरमणमुख्यप्राणांतर्गतो भैष्मीसत्यावल्लभो यदुनन्दनः श्रेयःपरंपरामनुपमां दद्यादित्याशास्महे।

तन्महोत्सवप्रत्यक्षदर्शी काश्यपः।

---

देवनगर्यां [ डावणगेरे ] संस्कृतप्रचारसंघः नामानुरूपं कर्माचरन् प्रशस्यो विद्योतते। तत्संघाध्यक्षाश्च तत्प्रान्ताधिकारिणोपि श्रौतस्मार्तकर्मानुष्ठानकुशलाः श्री. एम्. गुण्डप्पामहाभागा उपाध्यक्षाश्च तत्रस्थमाध्यमविद्यालयप्रधानाध्यापकाः महोत्साहशालिनः श्रीकृष्णस्वामिरावमहाभागा मंत्रिप्रभृतयश्च प्रशंसार्हाः संति। ततो माघशुक्लचतुर्दश्यां तत्रस्थश्रेष्ठिवर्यरचिते परमसुन्दरे सभागृहे संस्कृतमहोत्सवः समनुष्ठितः। श्री. अनंतराव असुण्डी रिटायर डि. जज्ज विजयपूर इत्येते महाभागा अध्यक्षपदमलमकुर्वन्। संस्कृतभाषाया महत्त्वं पंडितवराः सीतारामाचार्या आवेदयन्। ततः पं. बुर्लीश्रीनिवासाचार्यः संस्कृतकवयित्र्यः कर्णाटके कीर्तिभाज; सुरसरस्वतीसेवामन्वतिष्ठन् इत्यतोपि कर्णाटकजनाः संस्कृतं मा उपेक्षतामिति सोदाहरणमभाषंत। ततः श्रीपण्ढरीनाथाचार्याः सरसया सरलया आदर्शरूपया सरण्या संस्कृतभाषायामेव समुपन्यस्य सर्वानानंदतुन्दिलानकुर्वन्। ततश्च श्रीगुण्डप्पामहोदयाः श्रीकृष्णस्वामिरावमहोदया अपि संस्कृतभाषाया महतीमावेदयंन्तः अध्यक्षान् व्याख्यातॄंश्च पुष्पहारादिना समभ्यर्च्य धन्यवादपुरस्सरमभिनंद्य सभां व्यसर्जयन्!

---

# श्रीपण्ढरपुरक्षेत्रे विद्वत्सम्मेलनम्.

एतस्मिन्नेव वत्सरे गतमाघशुक्लप्रतिपदि मुंबईप्रांतीयविद्वत्सम्मेलनं मान्यनगरभूषणानां वैयाकरणशिरोमणीनां वेदांतसाहित्यादिपारंगमानां श्रीमतां काळेदादाचार्याणामाध्यक्ष्येण महता समारंभेण प्रावर्तत। प्रातः शतशो विद्वद्वराः सुस्नाताः प्रहर्षोत्फुल्लनयना वेदमंत्राणि उद्घोषयंतः श्रीमत्पूर्णप्रज्ञमहाविद्यालयतो निर्गत्य भगवतो भक्तवत्सलस्य पुण्डरीकवरदस्य पाण्डुरंगस्य संदर्शनेन प्रमुदितस्वांताः सभामन्दिरमलमकुर्वन्। बहवो नागरिका वैदिका लौकिकाश्च सम्मिलिता विशालमपि सभामन्दिरं समपूरयन् शुभागमनेन। श्रीमत्परमहंसेत्यादिबिरुदालंकृतानां ज्ञानवैराग्यभक्त्यादिगुणगणैरतिप्रसिद्धयशसां जगद्गुरुश्रीमदुत्तरादिमठाधीश्वराणां श्रीश्रीमत्सत्यज्ञानतीर्थयतीश्वराणां पूर्वाश्रमात्मजा विद्वत्कुलललायमाना विशुद्धचेतसः श्रीगंगूरहनुमंताचार्यवर्याः सन्निहिताः सभागृहमभूषयन्। नाशिक—धुळे—जळगांव—नान्देड—कोल्हापूर—सातारा—उदगीर—नीलंगा—सोलापूर—सांगली—बेळगांव—धारवाड—गदग—हुबळी—विजापूर प्रभृतिनगरेभ्यः सुप्रसिद्धा विद्वांसः समुपस्थिता आसन्। प्रथमतो वेदसूक्तमंगलघोषः ततो मंजुलगीतमंगलं समभूत्। ततः कोल्हापूरनिवासिनः पण्डितवराः बाळाचार्यखुपेरकरमहाभागा आरंभभाषणमकुर्वन्। ततः सुप्रसिद्धा वाकीलव्यवहारनिपुणाः श्रीकाणेमहाभागाः स्वागतभाषणेन सर्वानानंदयन्। ततः कार्याध्यक्षाः पंडितप्रवरा बाळाचार्यवरखेडकरमहोदया अध्यक्षपदमलंकर्तुं प्रास्तावयन्। विविधनगरागता विद्वद्वरा अध्यक्षाणां गुणगणान् वर्णयंतः अन्वमोदन्त। ततश्चाध्यक्षमहोदया गंभीरघोषं विद्वत्सङ्घटनाया आवश्यकत्वं वर्णयंतो विविधानुपायान् तच्छ्रेयसे समुपदर्शयंतः सांप्रतिकीं परिस्थितिमुपवर्णयन्तो भाषणेन प्राहर्षयन् सभ्यान्। ततो मध्यान्हे संध्यायां च समुचिता अनेके प्रस्तावा विविधविचारचर्चिता

निर्णीताश्च । ततश्च कृतज्ञताप्रदर्शनसाभिनन्दनधन्यवादार्पणाद्युपचारभाषणान्यभूवन् । ततो नैकसंस्थाभ्यः शतशो मालागुच्छादिषु समर्पितेषु श्रीमत्सत्यध्यानतीर्थविजयघोषपुरस्सरं सनातनधर्मजयघोषपुरस्सरं च सभा विसर्जिता.

---

## मुंबईप्रान्तीयसंस्कृतपाठशालासंचालकानाम्

# सम्मेलनम्

सम्मेलनमिदं माघशुक्लद्वितीयां पूर्वसम्मेलनस्थले एव समलंकृते समभूत् । नाशिकक्षेत्रवासिनः श्रौतस्मार्तकर्मानुष्ठानयजनयाजनादिकर्मनिपुणाः विख्यातयशसो धर्मशास्त्रनिष्णाता मीमांसकशिरोमणयः श्रीधरशास्त्रीवारेमहाभागाः सूचनानुमोदनपुरस्सरमध्यक्षपदमलमकुर्वन् । न्याय - वेदांत--व्याकरण--साहित्यपारावारपारंगमाः सरसगद्यपद्यलेखनकलाचतुरा गदगनिवासिनो न्यायामृतार्णवग्रन्थनिर्मातारः श्रीजालीहाळश्रीनिवासाचार्या आरंभभाषणमकुर्वन्। स्वागताध्यक्षाः स्वागतोक्तीर्व्याहरन् । ततश्चाध्यक्षाः संस्कृतस्य सांप्रतिकीं दयनीयामवस्थामुपवर्णयंतस्तदुद्धारायानेकानुपायान् संदर्शयंतो भाषणमकुर्वन् । ततश्च संस्कृतपाठशालाविद्यार्थि--अध्यापकवृन्दस्य श्रेयोनिदानभूता विविधाः प्रस्तावा निर्णीताः । महाविद्यालयेषु माध्यमविद्यालयेषु च (कॉलेज--हायस्कूल) संस्कृताध्यापनाय--प्राचीनपद्धत्या अभ्यस्य ये पंडिता वर्तंते तेषामेव योजना विधेया इत्येतदर्थे महान् विवादः समजनि । तथापि परिणामे बहुमतेन योजना विधेया इत्येव निर्णयो जातः । ततः औपचारिकाभिनंदनादिकार्यक्रमेण सभा विसर्जिता । उभयोरेतयोः सम्मेलनयोः कार्यकारिसमितिः नियमावली च चर्चापुरस्सरं निर्णीते ।

विद्वत्सम्मेलने सगोत्रविवाहशासनं सर्वथा अनुचितम् अतो विधिमंडले सर्वथा परित्याज्यमेवेति सर्वानुमतो निर्णयः समजनि ।

# श्रीमत्पूर्णप्रज्ञमहाविद्यालयरजतमहोत्सवः

रजतमहोत्सवो वेदघोषमंगलगीतपुरस्सरं प्रवृत्तः। अनेके विद्वद्वराः प्रधानाध्यापकानां यमनियमजपतपोनुष्ठानुपरायणानाम् शमदमादिगुणसंपन्नानां यजनादिषट्कर्मनिरतानाम् अनवरतविविधशास्त्रग्रन्थप्रवचनपरायणानां श्रीवरखेडप्रद्युम्नाचार्याणां तथा तदनुजानां विद्वच्छिरोमणीनां न्यायवेदान्तनिष्णातानां वरखेड श्रीनरसिंहाचार्याणां च गुणवर्णनपराणि बहूनि भाषणान्यभूवन्। ततस्तेषां विद्यार्थिनामन्यतमा न्यायवेदांतमीमांसासाहित्यतीर्थबिरुदालंकृता उमर्जीनरसिंहाचार्याः सर्वविद्यार्थिभ्यःस्सम्मेल्य राशीकृतं रूप्यकाणां सहस्रं प्रद्युम्नाचार्यचरणेषु पादप्रक्षालनपुष्पमालासमर्पणपुरस्सरमार्पयन् श्रीआचार्यवर्यपूज्यहस्तेन। तदवसरे सद्गदितांतःकरणा आचार्यवर्याः पण्ढरपुरे पाठशालाया अस्याः प्रतिष्ठापने अहमेव हेतुरित्यादिवृत्तांतमावदेयन्। ततः प्रहर्षवरवशाः श्रीप्रद्युम्नाचार्याः श्रीश्रीमदुत्तरादिमठाधीश्वरश्रीश्रीसत्यज्ञानतीर्थश्रीश्रीसत्यध्यानतीर्थगुरुसार्वभौमाणां गुणगणमुपवर्णयन्तः कृतज्ञतया तदनुग्रहबलादेव विद्यालयरजतमहोत्सवप्रसंगः समुत्पन्न इति आनन्दबाष्पमुत्सृजतः प्रथमत आरम्भ अद्यावधि पाठशालायां क्रमशो वृद्धिमावेदयन्। तथाः पण्डितप्रवरा नरसिंहाचार्या अपि प्रासंगिकविषयोदाहरणेन सर्वानानंदयन्। एवमुपस्थितानाम् सर्वेषामपि मौक्तिकानन्दराशिमुदपादयदयं रजतमहोत्सवस्सहृदयानाम्। ततः पुनस्सायमयं महोत्सवश्चातुर्मास्यमठे प्रावर्तत। पुण्यपत्तनालंकारभूता भोरमण्डलराज्ये लोकनियुक्तमंत्रिणो मध्वराजशिंगरेमहोदया अध्यक्षपदमलमकुर्वन्। तर्कतीर्थवरखेडकरबाळाचार्याः पाठशालाया आयव्ययादिवृत्तांतं लब्धयशसां विद्यार्थिनां नामानि अन्यदन्यद् यद् वक्तव्यमासीत्तदावेदयन्। अध्यक्षमहोदयभाषणमतिसरसं साभिमानं संस्कृतप्रणयिसमुचितं समभूत्। ततो महोत्सवमंत्री सर्वेभ्यः अध्यक्षादिस्वयंसेवकांतेभ्यो धन्यवादपुरस्सरमभ्यनंदत्। ततो मधुरवाणीसंपादकाः पं. बुर्लीश्रीनिवासाचार्यास्तथा पं. श्रीधरशास्त्रीवारेमहाभागाश्च एतदुत्सवत्रयकार्यकारिमण्डलं सुव्यवस्थया स्वागनेन निवासभोजनादिव्यवस्थामत्युत्तमतया अनुष्ठाय सर्वानस्मानमदानंदसागरनिमग्नानकरीदिति न्यरूपयन्। ततश्च औपचारिकपुष्पमालागुच्छतांबूलादिसंमर्पणेन रजतमहोत्सवः संपूर्णतामगादित्यलम्।

# अमृतं तु विद्या

श्रीमन्माननीयमुनशीमहोदयसंस्थापितभारतीयविद्याभवनान्तर्गतसंस्कृत-महाविद्यालयप्रधानाध्यापकानां निरन्तरनिगमान्तविद्याचिन्तनेन नितान्तशान्त-स्वान्तानामुभयमीमांसाप्रवीणानां **श्रीमत् टीं. ए. वेङ्कटेश्वरदीक्षितार महोदयानां "पण्डितराज"** बिरुदसमासादनसमयं समभिलक्षी-कृत्य कृतम्—

## अभिनन्दनम्

श्रीपण्डितवर्य ! भावजगुणैर्वाग्देवतामावितैः
मीमांसाद्वयाचिन्तनादुपगतैः सानन्दमावर्जितः ।
कोचीनाधिपतिः प्रशान्तमनसा सम्माननामातनोद्
यामेतामिह तां निशम्य मुदिताः सर्वे वयं सादराः ॥
सोत्साहं ननु सङ्गता भवनगाछात्रास्तथाऽध्यापकाः
हर्षोद्रेकविकासनैकमतयः सुस्वागतं ब्रूमहे ।
तामानन्दमयीं सुरासुरनुतामभ्यर्थयामश्च यद्
भूयोऽप्येवमुपैतु कोऽपि ललितः कालः शुभावेदकः ॥

**श्रीमदीयाएव,**

भूतपूर्वतिरुपतिकलाशालाप्रधानाध्यापकाः सम्प्रति भारतीयविद्याभवनस्य-संस्कृतविभागस्य प्रधानाध्यापका उभयमीमांसाप्रवीणाः श्रीमन्तः टी. ए. वेङ्कटेश्वरदीक्षितार महोदयाः संवत्सरेऽस्मिन् कोचीनमहाराजेन "पण्डितराज" इत्युपाधिना समलंकृताः । सन्तुष्टान्तरङ्गैरत्रत्यैः पण्डितैरभिनन्दनपत्रावितीर्णेन महोत्सवेन सम्मानिता एते । तदानीं प्रिन्सिपॉल के. एम्. वकील, डॉ. करमरकर प्रो॰ज्ञानी. पाण्डेयशास्त्री प्रा. जोशी महाशयानामेतेषां पण्डितराजानां पाण्डित्यप्रकर्षगुणवर्णनपराणि व्याख्यानानि समभूवन् ।

---

श्रीशः शरणम्

# मधुरवाणीप्रसादः

( लेखिका—सौ. सुलोचनादेवी )

प्रियभ्रातृनिर्विशेषेषु संपादकमहोदयेषु सविनया विज्ञप्तिः—

बहोःकालान्मधुरवाण्यां कमपि विषयमधिकृत्य किमपि वा लेखनीयमिति महती बलवती च मे समुत्कण्ठा। पूर्वजन्मसंस्काराद्वा विद्वत्कुले जन्मवशाद्वा प्रज्ञतमस्य जनकस्य नैकशिष्येभ्यः निरन्तरकृतप्रवचनाकर्णनमहिम्ना वा परिचितसंस्कृतसाहित्याया जनन्याः सहवासाद्वा अधीतसंस्कृतविद्यानां सहोदराणामनुकरणमहिम्ना वा बाल्य एव समुदभून्मम साधारणेतरः प्रणयो गीर्वाणवाण्यां सहजतया। इदानीं स्मर्यते मया यदष्टवर्षदेशीयैवाहं प्रत्यज्ञासिषं संस्कृतसाहित्ये वैदुष्यंसंपादयेयमिति। तदनुसारं सहोदरसान्निध्येऽध्ययनमुपाक्रामि मया क्रमेण। अमरकोशं भाण्डारकरपुस्तकद्वयं रघुवंशादिपञ्चकाव्यानां कतिपयसर्गान् रामायण—भारत—नलचम्पूषु कांश्चिदंशान् समग्रमेघदूतं कालिदासीयनाटकत्रयं भवभूतेर्नाटकद्वयं भासस्य नाटकचक्रं वेणीसंहार—रत्नावलीमुद्राराक्षसमित्यादीनिकानिचनेतरनाटकानि कादम्बर्याः पूर्वभागं रामायण—महाभारतयोः कांश्चनभागांश्च सादरमात्मसादकरवमहं कतिपयेषु वर्षेषु विवाहात्प्रागेव। त्रिचतुराणामलङ्कारग्रन्थानामपि समासादयं परिचयम्। कवितासखीप्रेमसंपादनेऽपि प्रयत्नमकरवमहम्।

एवं गच्छति समये सर्वथैव नृणां विशेषतो वनितानां स्थित्यन्तरापादको जन्मकुलादृष्टाश्रुतपूर्वे नितान्तमपरिचिते भृशमज्ञातशीलस्वभावेऽन्यास्मिन् कुले बलादिवनिक्षेपक्षमः समापतितः परिणयप्रसङ्गो मम आसन्नचतुर्दशवर्षीयायाः। नाहमज्ञासिषं तदा सोऽयं प्रसङ्गो दुःखमयः सुखमयो वेति। जन्मनः प्रभृति कदाऽप्यवियुक्तपितृमातृविरहकल्पनया प्रथमं दुःखमय

इति तदनु भाविवल्लभसहवासमहिम्ना स्वर्गसम एवेति निर्धार्य नववयोवायुलोलासु नव-नवासु कल्पनालहरीषु प्लवमाना कमप्यानन्दविशेषमनुभवन्ती व्यस्मरमात्मानमपि । परं स्मृतिपथान्नेत्र अपासारयं सुरवाणी प्रणयम् । मनसि प्रत्यश्रौषमहं संस्कृतज्ञस्यैव वरस्य पाणिपल्लवं गृह्णीयाम् नेतरममङ्गलं करमिति । प्रादुरकार्षं ममाशयं शिक्षकस्य भ्रातुरग्रे । सोप्यऽभ्यनन्दन्माम् । न्यवेदयच्च मदीय हार्दं पित्रोः । तावपि सुलभो नेदृशो वरः सांप्रतमितिप्रथममनभिनन्दन्तौ ममाग्रहविशेषेण तादृशवरसंशोधने प्रावर्तिषाताम् । केचन वरा मां द्रष्टुमभ्यागताः । पुरस्कृताश्च पित्रा । पर्यैक्षन्त मां विविधैः प्रकारैः विक्रेयपशुमिव वरपाशानुबन्धिनः । बधिरताशङ्कया मन्दस्वरेणान्वयुञ्जत मदीयं नाम । मूकतासंशयेनापृच्छंश्च भ्रातृनाम–सङ्ख्यादिकम् । पुस्तकवाचनेऽप्यादिशन्माम् . खञ्जतासन्देहेन प्रैरयन् कानिचन पदानि गन्तुम् । तदा महानेव समजनि कोपो मनसि । ईदृशपरीक्षणाय नाहं विक्रेयः पशुरिति स्पष्टमभिधाय ततो निर्गन्तुं मतिरासीन्मे तदा । परं कुलकन्यकानां नेदृशी धृष्टता समुचितेति मन्वाना कथमपि पर्यवस्थापयमात्मानं । गातुमाज्ञापयन्केचन । कुलकन्यकाया अपि मे वारवनिताया इव नर्तनाभिनयनियोगेऽपि न समकुचत्तेषां चेतः, न वाऽत्रपत किञ्चिदपि । निसर्गतो मधुरस्वराणां ललनानां सङ्गीतमावश्यकम् । परं नर्तनविद्यायाः कोपयोगः । यौवनदशामापन्नायाः योषितो साभिनयनर्तनं किं रोचेत वल्लभाय रहस्यपि । किं पुनर्जनसमाजे । परं विकृतमनसा जनास्तादृशनर्तनदर्शने पर्युत्सुकाः सन्त्येव । परं तदिच्छानलज्वालायां कुलीनमानिन्या मानस्य शीलस्य लज्जायाश्चाहुतिकरणं समाजस्य देशस्य मानवतायाश्चाधःपातस्य परा काष्ठा । परमीदृशेनितान्तं गर्हणीये कर्मणि जनना निस्सङ्कोचां सोत्साहां साभिनिवेशां च प्रवृत्तिं निरीक्ष्य चित्रीयते चोद्विजते च चेतः । अस्तु ।

मम रूपशीलादिमुग्धेष्वपि कुल–शील–विद्या–वयो–धनसम्पन्नेष्वपि वरेषु ममाभीष्टतमस्य संस्कृतज्ञानस्य वैकल्येन न कोऽपि मे रुचितः । यस्य रसनाराङ्गणे न नरीनर्ति सुरवाणी तस्य मधुरापि वाणी कथमणी-

यसीमपि तन्यान्मुदं मे । यस्य हृदयं संस्कृतसरसवाङ्मयपरिशीलनेन नार्द्रीभवति स कथं हरेन्मे मानसमरासिकः। यस्य कर्णे मुहुर्मुहुर्न प्रविशन्ति मनोहराणि संस्कृताक्षराणि स कथं मे प्रेमगर्भाणि वचनान्याकर्णयितुमर्हतां भजेत् । यस्य च करः संस्कृतलेखनेन न पावितः, तस्य तममङ्गलं पाणिं कथं वा निपीडयेयं । एवं नैकेषु सर्वगुणसम्पन्नेष्वपि वरेषु मया धिक्कृतेषु महतीमेव चिन्तामवापतुर्मेपि तरौ । यत्र इतरे सर्वेगुणाः। न तत्र संस्कृतविद्या-गन्धः, यत्र च संस्कृतविद्या समृद्धिः न तत्र इतरे गुणाः इति वरदौर्लभ्येन नितान्तं चिन्ताक्रान्तां जननीमवोचं रहसि । मातः । वृथा मा कृथाश्चिन्तां मत्परिणये । संस्कृतज्ञाय कुलीनाय देयाऽहम् । न तत्रेतरे गुणा अपेक्षणीयाः । संस्कृतज्ञमन्धमपि वृणुयाम् । वधिरमपि परिणयेयम । खञ्जमपि रञ्जयेयम् । व्यङ्गमपि सानन्दमङ्गीकुर्याम् । व्याधिग्रस्तमपि सम्मानयेयम् । जराजीर्णमपि प्रणयभाजनं कुर्याम् । सुदामसहोदरमपि प्रेम्णा समुद्वहेयम् । न त्वन्यं सर्वगुणसम्पन्नमपि । तत्साधारणः संस्कृतज्ञो वरोऽन्विष्यतामिति । गतायां कियत्यामपिकालकलायां समासदि पितुः प्रयत्नेन वा मम सौभाग्येन वां मदभीष्टः संस्कृतविद्यानिष्णातः पितृसम्मतः कुल—शील—वयोधनादिसम्पन्नो वरः । यथाविधि समभूदावयोर्विवाहमहोत्सवः । अभीष्टवल्लभलाभेनाहममोदे । संस्कृतविदुषीप्राप्त्या प्राणेश्वरोऽपि मुदमवाप । अर्हत्तमजामातृलाभेन प्रमोदस्य परां सीमामवापतुः पितरौ । तदनु कतिपयेष्वेव दिवसेषु पतिगृह-मुपेत्य कञ्चन कालंमुषित्वा सहोदरविवाहनिमित्तंमातृगृहमुपायाम् । अल्पी-यस्येव समये परस्परगुणलुब्धयोः प्रेमपरवशीकृतचेतसोरावयोर्दम्पत्योर्विरह-विनोदार्थं प्रेमपत्रिकादूतीनां सञ्चारः प्रवृत्तः । तानि च पत्राणि विना रहस्यगोष्ठीं मधुरवाण्यां प्रकाशयितुमभिलषामि दयितसम्मतिर्लब्धा चेत् । यदा आर्यपुत्रस्य सरसशैलीललितं भावगंभीरं विनोदमयं प्रथमं पत्रमागतं तदा संस्कृतज्ञापि लेखनकलाविधुरा प्रत्युत्तरितुमक्षमा महत्येव सङ्कटे पतिताऽसं । कथं वा प्रियतमाय पत्रं लिखेयम् । अलिखित्वा कथं वा स्थेयम् । उभयतः पाशारज्जुः । कथमपि वा पत्रलेखने परिहसत्यार्यपुत्रः । अलेखने

कोपसंरम्भः । तदनु बहुविचार्यअल्पाक्षरं पत्रमेकमलिखम्—"अल्पीयस्येव समये भवते सविस्तरं पत्रं लिखेयम् । इदानीं संस्कृतलेखनव्यवसायं शिक्षितुमारब्धवती अचिरादेव समीहितं साधयेयमिति बलवान्मे प्रत्ययः । तत्तावत्क्षन्तव्यो ऽयंप्रथमो मन्तुर्मे दास्याः" इति । तदनु सहोदरं संप्रार्थ्यतन्निदेशेन संस्कृतचन्द्रिकासाञ्चिकाः पर्यशीलयम् । मधुरवाणीं शरणमगच्छम् । नैकाः संस्कृतपत्रिका अन्ववाचयम् तत्र मधुरवाण्या एव सरसा सरला ललिता नातिप्रौढा नातिप्रोत्ताना मर्मस्पर्शिनीलेखनशैली बदादेव समाकर्षन्मे चेतः । पुनः पुनरवाचयम् । मुहुर्मुहुः परामृशम् । वारं वारं प्रायते तामेव शैलीमनुकर्तुम् । तद्गतांश्च कांश्चन लेखान्कण्ठगतानकरवम् । तत्परिश्रमेण अत्यल्प एव काले लेखनकलामात्मसादकरवम् । प्राहिणवं च विस्तृतमुत्तरपत्रं प्रेयसे । तदनुवाच्य नितान्तं सन्तुष्टो मे वल्लभो 'मयाद्यावधिनूनमनधिगता लेखनशैली कुतोऽधिगता त्वयेति पत्रे नितरांप्राशंसन्माम् । तदेतन्मधुरवाणीप्रसाद एवेति कृतज्ञा मन्देतरमानन्दमन्वभवमहम् । मधुरवाणीं प्रत्युपकर्तुमशक्नुवाना लेखमुखेनाऽपि स्वल्पेतरदृणं परिहर्तुमभिलषामिकृतज्ञताभारावनतशिरा अहम् । तदेतनुमन्येत सहोदरकल्पःसंपादक इति वाढं विश्वस्य विरमत्ययं जनः पुनर्लेखनाय ।

भवत्सहोदरी

**सौ. सुलोचनादेवी.**

सोदरि सुलोचने । भवदीयं लेखमनुवाच्य भृशमन्वभवाम कमप्यनिर्वचनीयं प्रमोदभरम् । चिरादेव समुत्कण्ठते मधुरवाणी साजात्यप्रेम्णा भवादृशीनां विदुषीणां सरसलेखै रलङ्कृता भवितुं । परं सतीष्वपि बह्वीषु विदुषीषु द्वित्रा विसृज्य न का अपि सुरवाणीं सेवितुं अभिलषन्ति न वा प्रयतन्ते । तत्त्वदीयमध्यवसायं व्यवसायं च नितरामभिनन्दामः सादरम् । पुनःपुनर्लेखप्रेषणाय सानन्दं सादरं सप्रशंसं साग्रहंच निर्बध्नाति मधुरवाणी विदुषीं भवतीम् । तव चिरायुरारोग्यादिना समं निरन्तर सुरसरस्वतीसेवाश्रेयःसदाऽऽशास्महेवयम् ।

संपादकः

# विमर्श वेदिका

## न्यायामृतार्णवः

वेदान्तसाम्राज्यप्रसरांसृप्यमाणाऽज्ञानतिमिरभरनिरसननिपुणतरयुक्ति--विसरकिरणगणभास्वरो न्यायामृतग्रन्थभास्करःचिरादेवोपजनयति प्रातिपाक्षिप्रेक्षावदक्षिमान्द्यं दार्शनिकप्रपञ्चे । तमेनं शास्त्रीयसारस्वतशुभ्राभ्राऽभोगविभ्राजिष्णुग्रन्थग्रध्नं तिरयितुं निष्प्रभं निस्तेजस्कं निष्प्रसरं च विधातुं नैक एव अद्वैतसिद्धि–ब्रह्मानन्दी–अद्वैतचन्द्रिकाप्रभृतिप्रौढग्रन्थघनाघना दुरूहतर्कोर्जितस्फूर्जथुगुरस्सरं पुरःप्रासर्पन् पर्यवेष्टन्त प्रायतन्तच । परं सवेगं दोधूयमान तरङ्गिणी–सौगन्ध्यादिप्रबलतरयुक्तिजालप्रातिपक्ष्याक्षेपप्रातिक्षेपदक्षपूर्वपक्षप्रचण्ड झञ्झावाताऽघातप्रत्याघाताऽहतिच्छिन्नभिन्ना जीर्णशीर्णाश्चूर्णीकृताश्च मोघाडम्बरास्ते सर्वेपि अम्बुधराः कुत्रापि निलिल्युः ।

एवं निर्धूताऽखिलांऽभोधरनिकुरम्बससंभ्रमोज्जृम्भण संरंभप्रशान्तनिर्मले वेदान्तविशालाम्बरतटे पुनरपि सहस्रगुणीभूताऽप्रतिमाऽतिप्रखरप्रभाप्रभावप्रभासमाने प्रभाऽसमाने न्यायामृतप्रद्योतने प्रद्योतमाने तदेतदीयतेजःप्रकर्षधर्षिता अनङ्गमाना अनन्तकृष्णशास्त्रिगः सौगन्ध्यविमर्शरूपेण धूलीप्रक्षेपेण तमेनं ग्रन्थाहस्करं प्रतिकर्तुं प्रायतन्त । परं किमनेन एतादृशेन धूल्यञ्जल्युत्किरणेन कौशिकघूत्कृतेन वा बाधकं हानिर्वा भवेत् तस्य ग्रन्थप्रचण्डमार्तण्डस्य ।

अथाऽपि तनुरपि कण्टकः वेदान्ताऽध्वन्यध्वनीनं नूनं प्रतिबध्नीयात् तनुतरमपि विषबीजं नैवोपेक्षेत इति वचनमनुसृत्य तमेनं न्यायामृतप्रतापादित्यमण्डलोपरि धूल्युत्क्षेपमपि प्रतिक्षेप्तुं कुशाग्रकुशलधिषणाधिषणः हुनगुन्देत्युपाह्वश्रीनिवासाचार्यैः न्यायमृतार्णवनामकग्रन्थमेकं विरच्य गाढमुन्मुद्रयति विद्रोहिणां वदनविवराणि । अस्मिन्खलु नूत्ने ग्रन्थरत्ने अनेन प्रेक्षावता

लब्धान्वीक्षकीविलक्षणवैचक्षण्येन विपश्चिद्वरेण्येन नैपुण्येनैव अक्षरशः प्रतिक्षिप्ताः शास्त्रिमहोदयानां पक्षपातपक्षवातकवलिताः सर्वेऽपि आक्षेपपूर्वपक्षाः। आचूलमूलं परिशीलिते चास्मिन्ग्रन्थे प्रतीयादेव ग्रन्थग्रथितुः प्राचीनद्वैतग्रन्थेषु गाधेतरा गाढा च सर्वंकषवैदुषी।

तत्र पुष्कलस्थलेषु प्राचीनाद्वैतखण्डनपरग्रन्थेभ्यः विशेषतः द्वैतद्युमणिग्रन्थरत्नत एव बंहीयासमेव भागं बहूनेव च परिष्कारानुद्धृत्य उदाहृत्य च शास्त्रिमहाशयाक्षेपाणाम् अनैदंप्राथम्यं दत्तोरतां नावीन्यनैयून्यं च साधु व्यक्तीकरोति मनीषितल्लजः श्रीनिवासाचार्यः। तत्र तत्र अनेन पुरस्कृता परिष्करणधोरणी प्रादुष्करोत्यस्य असाधारणीं न्यायनयनैपुणीम्।

अस्मिंश्च प्रबन्धे मङ्गलश्लोकप्रणयनादौ तत्र तत्र परिदृश्यमानां प्रथनशैलीशैथिल्यम् अपह्नुतिपदार्थानतिदूरवर्तिनीम् अनुकृतिं सूक्ष्मदृगैकनिभाव्यमानाः सदसत्संशयगोचराः काश्चित् क्षुद्रदोषकणिकाश्च उद्धृत्य उच्चार्य प्रदर्श्य च पौरोभाग्यमाचरन्तः दोषज्ञाः कदलीवनं प्रविश्य कण्टकमेव अन्वेषयतः क्रमेलकस्यैव सरणिमनुसरन्तीति मन्येऽहम्।

नूनमनेन कृतिना अनया कृत्या एकान्तत एव नितान्तमुपकृतो मध्वसिद्धान्तपद्धतिबद्धश्रद्धबुद्धिः वैष्णवलोकः। अपकृतश्च मायिलोकः। अपाकृतश्च केषांचित् "अनन्तकृष्णशास्त्रिसमुद्भावितदोषाणाम् अनुद्धरणीयता अनुत्तरणीयता च एव माध्वविपश्चिदपश्चिमानां वाचंयमित्वस्य निदानम् इति" वृथा प्रलापः।

पुस्तकस्यास्य सुवर्णभासुरं मुखपत्रं, सुन्दरतराणि सुवाच्यतमानि च अक्षराणि, मसृणतमानि कागजानि मनोरम आकारः महत्तमाश्च विषया सद्य एव आवर्जयन्ति अवलोकयितॄणामन्तरङ्गाणि।

सुधारकजनौदास्याऽवज्ञाऽतपभरशुष्यमाणवेदान्तधन्वभुवि एतादृशीनैका एव सरसकृतिसरसीः निर्माय तत्वबुभुत्सूनां ज्ञानबुभुक्षूणां अध्यात्मरसपिपासूनां च चेतांसि एवमेव भूयोभूयो निर्वापयिष्यतु श्रीनिवासाचार्य इत्याशास्य सत्यामपि सविशेषायां विलिलिखिषायाम् अङ्कपरिणाहभिया इयतैव अत्रैव विरिरंसामः सविनयमवातितीर्षामश्च विमर्शवेदिकातः पुनरारोहणार्थम्।

---

# राजनीतिशास्त्रं

ले. कृष्णचार्यजोषी बी. ए. एल्एल्. बी. अड्वोकेट हैद्राबाद (दक्षिण).

महदिदं प्रमोदस्थानं यद् भारतीयाः श्रृङ्गारमयसाहित्यरङ्गमण्टपं कादम्बरीनाटकादिकल्पितस्वप्नसुन्दरसुवर्णक्रीडाङ्गणसलीलचंक्रमणं च विहाय परितः प्रवृद्धप्रपञ्चे सत्यसृष्टौ इतइदानीं चक्षु निक्षिपन्ति साश्चर्यमालोकयन्ति सकुतुकमालोचयन्ति च समाजशास्त्रराजकारणभौतशास्त्रादीनि। श्रीयुत-जयस्वालवेणीप्रसादप्रभृतिविनिर्मितानि ग्रन्थरत्नानि सम्यगेव प्रत्याययन्ति भारतीयनवजागृतिं भारतीयप्राचीनराज्यशास्त्रपाण्डित्यं च। परं कर्नाटकभाषायाम् एतादृशग्रंथानां चिरादेवासीन्न्यूनता। तन्न्यूनतापरिजिहीर्षया श्रुतिस्मृतिभारतकौटिलीयाऽर्थशास्त्रादिपौरस्त्यग्रन्थान् प्लेटो अरिस्टाटल् यॉली बोड ब्रौन लीकाक लारेन्स लास्कि प्रभृति पाश्चात्यग्रन्थांश्च कूलंकषमभ्यस्य आलोड्य निर्मथ्य च आविष्कृतं **भारतीयराजनीतिशास्त्रं** श्रीकृष्णाचार्यैः।

तत्र जागतिकाधुनिकराजकारणं संचर्च्य षष्ठसप्तमप्रकरणयोः भारतीय प्राचीनराजकारणं मीमांस्यते। भारते प्राक् राजानः हिटलरादिवन्निरंकुशा आसन्निति वृथा वितथा चेयं प्रथा। राज्ञां सर्वाधिकारित्वं भारतीयशासनशास्त्रं नैवानुमन्यते। "त्वां विशो वृणुताम्" इत्यादि अथर्व-मन्त्रतः प्रजाभिस्स्वयं वृत एव राजा भवितु मर्हतिस्म। स अयोग्य श्चेत् तं सिंहासनात् प्रच्यावयितुमप्यसीत्तदा **विशा समिति पौरजानपदस-भा**दिप्रजाप्रतिनिधिकसंस्थानमधिकारः। अन्तर्राष्ट्रीयनियमा अपि प्रदर्शिताः मनुस्मृतिकौटिलीयार्थशास्त्रादिषु। जनतानियुक्तमुख्यमन्त्रिपरराष्ट्रमन्त्रिआर्थिक-मन्त्र्याद्यनेकमंत्रिमण्डलसूचनानुसारं क्रमवद्धरीत्या राज्यशासनं चलतिस्म। शासन न्यायदान परराष्ट्रतन्त्र मन्त्रिमण्डलरचना संधि संग्राम शान्तिमन्त्रादि सर्वतन्त्रसुसंघटिता सहस्राधिकवर्षप्राक्तना भारतीयराज्यशास्त्रव्यवस्था इदानीं विंशतिशतमाने ज्ञानविज्ञानगिरिनृत्यदैरोप्यराष्ट्रीयराजकीयव्यवस्थातः नांशतोपि परिहीयते स्मति व्यवस्थाप्य भारतीयसांस्कृतिकगरिमाणं वैदिकनागरिकतावारि-माणं च प्रदर्श्य उपकुर्वतः कृष्णाचार्यान् सानन्दमभिनन्दामः

# संस्कृतंपत्रस्यविनोदाङ्कः

हास्यं धास्यति कस्य लास्यमधुना धन्यस्य नाऽस्याम्बुजे ?

अस्मिन्समये सर्वाण्यपि वृत्तपत्राणि दैनिकानि साप्ताहिकतां साप्ताहिकानि मासिकतां मासिकानि त्रैमासिकषाण्मासिकतां क्वचिद्वार्षिकतामप्युपगच्छन्ति । नैकसहस्रग्राहकानुग्राहकरूपायष्ट्यालम्बनानां देशभाषापत्रिकाणामेव यदि इयमीदृशी दशा तदा किंनु वक्तव्यं बद्धमुष्टिमुष्टिमेयवाचकशुष्कग्राहकानुभूतिशुष्यन्तीनां संस्कृतपत्रिकाणां विषये । तासु काश्चित् कोकिलवद् वसन्ते कूजन्ति काश्चन मयूर इव प्रावृषि केकाकलरवमाविष्कुर्वन्ति काश्चिच्च भृङ्गय इव शरदि मञ्जुगुञ्जगीतमातन्वन्ति । एवं सर्वास्वपि संस्कृतपत्रिकासु विद्युदाडम्बरमेव विडम्बयन्तीषु संस्कृतसाप्ताहिकस्य नियतकालप्रकाशनं तत्रापि च विशिष्टाङ्कप्रकाशनं कस्य वा सहृदयप्रेष्ठस्य विशिष्टां चित्ततुष्टिं कलयितुं नेष्टं ?। कस्य वा मनसि नोदीयात् सानन्दसाहचर्यम् आश्चर्यम् ?।

विविधविनोदमयलेखोपबृंहितोयमङ्कः कस्यापि गम्भीरप्रकृतेः दुःखितस्य वा अधरपल्लवे मृदुलमुन्मीलयेदेव मन्दहासमाल्लिकामुकुलं । नूनम् एतादृशप्रकाशनैः संस्कृतवाङ्मयस्य महती हास्यरसस्य न्यूनताऽचिरादेव परिहृता भवेदेवेत्याशास्महे । एतादृशविशिष्टाङ्कप्रकाशनसाहसधीरं संपादकं व्यवसायबन्धुं सादरमभिनन्दामि । एतदङ्कस्य संपूर्णमुद्रणानन्तरमेवास्य विनोदाङ्कस्य प्राप्त्या स्थलाभावात् नाधिकमेतत्स्वारस्यं समुपाहर्तुम् पारयामः । अतः सहृदयावाचका एव तमेनमङ्कं गृहीत्वा तद्रसमवश्यं स्वदन्तामिति संसूच्य विरमामो विस्तरभयात् ।

पंढरीनाथाचार्यः सहसंपादकः

---

## ग्राहकेषु सविनयमभ्यर्थना

मधुरवाण्या अग्रिमांकः सोलापुरीयतुरीय द. भा. स. सा. संमेलनांकतया प्रकाशयिष्यते । तत्रत्यं समग्रं वृत्तान्तजातं भाषणादिकं च नाद्यापि अस्मद्हस्तगतम् । मधुरवाण्याः संपादका अपि स्वतन्त्रमुद्रणयन्त्रार्थे धनसंग्रहाय नैजामराज्ये संचिचरिषन्ति । तदर्थमपि च यदिस्यात्पुरस्तनसंचिकाप्रकाशने किंचिदिव कालविलम्बः क्षम्यतां महाभागैः ।